॥ श्रीः ॥

# प्रतिबन्धकतावादः



महामहोपाध्याय श्रीगदाधरभट्टाचार्य
विरचितः

काशीश्वरराजकीयसंस्कृतप्रधानपाठशालायां व्याकरणोपाध्यायपदवीं लब्धवता पटवर्धनोपाह्व नारायणशास्त्रिणा परमपरिश्रमेण संशोध्य

काश्यां

राजराजेश्वरीनामक यन्त्रालये



संमुद्र्य प्रकाशितः ॥

॥ श्रीः ॥

# प्रतिबन्धकतावादः

गदाधरभट्टाचार्य विरचितः ।

श्रीगणेशायनमः । तद्धर्मनिर्विकल्पकानन्तरन्तद्विशिष्टवैशिष्ट्यबोधानुदयात्तत्र तद्धर्मप्रकारकंज्ञानंकारणंविशिष्टवैशिष्ट्यबोधस्य विशिष्टप्रतियोगिकवैशिष्ट्यबोधो विशिष्टानुयोगिकवैशिष्ट्यबोधस्य । यथाकारणतावच्छेदकत्वमेवकारणादौ विशेषणत्वं तथा प्रतियोगित्वानुयोगित्वयोरवच्छेदकत्वमेव प्रतियोग्यनुयोगिनो विशेषणत्वमिति तदवच्छिन्नप्रतियोगिताकत्वमेव तद्विशिष्टप्रतियोगिकत्वं तदवच्छिन्नानुयोगिताकत्वमेव च तद्विशिष्टानुयोगिकत्वं नतु विशेषणविशेष्योभयपर्याप्तप्रतियोगिताकत्वंतद्विशिष्टप्रतियोगिकत्वं तादृशोभयपर्याप्तानुयोगिताकत्वं तद्विशिष्टानुयोगिकत्वं भूतलाद्यनुयोगिकदंडादिविशिष्टपुरुषादिवैशिष्ट्यप्रतियोगितायादंडादिविशिष्टपुरुषादिनिष्ठकुण्डलादिवैशिष्ट्यानुयोगितायाश्च दंडाद्यवृत्तितयादंडाद्यंतर्भावेनतत्पर्याप्त्यसम्भवात् तयोर्दंडादिनिष्ठत्वे भूतलपुरुषादौपुरुषकुण्डलादेरिवभूतलदण्डादौ दण्डकुण्डलादेर्विशिष्टधीत्वप्रसङ्गात् । तत्र तदभावसत्वप्रसङ्गाच्च । वैशिष्ट्यप्रतियोगित्वानुयोगित्वयोरवच्छेदकत्वे तद्वैशिष्ट्यसमयावच्छेदेनतद्वतिसत्वं तन्त्वं विभिन्नकालावच्छिन्नवृत्तिकयोरवच्छेद्यावच्छेदकभावविरहात् । तद्वैशिष्ट्यप्रतियोगित्वानुयोगित्वयोश्चवैशिष्ट्यस्वरूपानतिरिक्ततया तद्वैशिष्ट्यावच्छेदककालावच्छेदेनावर्त्तमानस्य तत्प्रतियोगित्वानु-

योगित्वसमानकालावच्छिन्नत्वासम्भवेन तदवच्छेदकत्वासम्भवा-
त् । अतोयदाभूतलेपुरुषवैशिष्ट्यन्तदन्यकालएवपुरुषेदण्डवैशि-
ष्ट्यन्तन्नभूतले दण्डविशिष्टपुरुषवैशिष्ट्यमपि तु दण्डोपलक्षि-
तद्वैशिष्ट्यमेव एवं यत्रविभिन्नसमयावच्छेदेनपुरुषेदण्डकुण्डल-
योर्वैशिष्ट्यं तत्र नएकविशिष्टानुयोगिकमपरवैशिष्ट्यमपित्वेको-
पलक्षितानुयोगिकमेव अत एव चपक्षतावच्छेदकविशिष्टे साध्य-
वैशिष्ट्यं गन्धप्रागभावकालीनघटोगन्धवान् पृथिवीत्वादित्यत्रा-
नुमितिर्नावगाहते । अपितुसामानाधिकरण्यमात्रं साध्यस्येत्यु-
पाध्यायाः । एवं तद्धर्मसामानाधिकरण्यस्यसामानाधिकरण्य-
सम्बन्धेन तद्धर्मस्यधावैशिष्ट्यप्रतियोगितावच्छेदकत्वे वैशिष्ट्यानु-
योगिनस्ता दृशसामानाधिकरण्यनिरूपकाधिकरणत्वं नत्वम
अतः गुणान्यत्वसामानाधिकरण्येनसामानाधिकरण्यसम्बन्धे-
न गुणान्यत्वेनवाविशिष्टस्य सत्वादेर्गुणादौनवैशिष्ट्यं । नचैवं
भूतलादिदेशस्य पटादिसमयवृत्तित्वविशिष्टघटाद्यधिकरणत्वा-
नुपपत्तिरितिवाच्यं । तत्सम्बन्धघटितसामानाधिकरण्यादेस्त-
त्सम्बन्धप्रतियोगितावच्छेदकत्वे तत्सम्बन्धप्रतियोगितावच्छेदक-
प्रतियोगिकत्वे एव वा उक्तस्य नियामकत्वात्कालिकसम्बन्धे-
न महाकालान्यवृत्तित्वविशिष्टघटादेस्तेन सम्बन्धेनवैशिष्ट्यं-
महाकालेनोपेयते । एवं च महाकालोघटवान्कालपरिमाणा-
दित्यादौप्रतियोगितावच्छेदकविशिष्टप्रतियोगि व्यधिकरणा-
भावाप्रसिद्ध्याशङ्कादीधितिकृतांकथ चिदुपपादनीया । इत्थं-
चवैशिष्ट्यप्रतियोगिताऽनुयोगितावच्छेदकप्रकारकज्ञानयोर्वैशि-
ष्टवैशिष्ट्यप्रत्ययहेतुत्वपर्यवसानात् । विशेषणतावच्छेदकविशेष्य-
तावच्छेदकप्रकारकज्ञानन्तद्धेतुरितिप्रवादः । वैशिष्ट्यप्रतियोगि-
त्वादेरेवविशेषणत्वादिपदार्थत्वात् । वैशिष्ट्यांशेविशिष्टनिरूपित



त्वविशिष्टानुयोगिकत्वावगाहिबुद्धावेव विशेषणतानुयोगिताव-
च्छेदकप्रकारकज्ञानंहेतुः नतु वास्तवविशिष्टनिरूपितविशिष्टा-
नुयोगिक वैशिष्ट्यबुद्धौतत्तद्दण्डादिप्रतियोगिकस्य तदनुयोगि-
कस्य च संयोगसमवायादिरूपवैशिष्ट्यस्यनिखिलस्यैवदण्ड-
त्वादिविशिष्टनिरूपि तत्वे पिदण्डत्वादिनिर्विकल्पकानन्तरंवि-
शेष्येविशेषणंतत्रापि च विशेषणान्तरमितिरीत्याएकत्रद्वय-
मितिरीत्या च दण्डीपुरुषःदण्डीरूपवानित्यादिप्रत्ययस्यनानु-
पपत्तिः । पीतःशङ्खोनास्तीत्यादिबुद्धेःशङ्खत्वाद्यवच्छिन्नप्रतियो-
गित्वांशेपीतत्वाद्यवच्छिन्नत्वभ्रमात्मकस्यवास्तव पीतत्वादि-
विशिष्टनिरूपितवैशिष्ट्यानवगाहित्वेपि नपीतत्वादिनिर्विक-
ल्पकानन्तरमापत्तिः । अथसोंदलोपाध्यायमतेशशीयतयाशृङ्गं-
नास्तिसमवायितयावाच्यत्वन्नास्तीत्याद्याकारिकायाः व्यधिक-
रणधर्मावच्छिन्नाभावबुद्धेः शशीयत्वसमवायित्वाद्य वच्छिन्नप्रति-
योगिताकत्वरूपतत्तद्धर्मविशिष्टनिरूपितत्वावगाहितयातत्तद्ध-
र्मप्रकारेणशृङ्गवाच्यत्वादिरूपविशेषणज्ञानंविनाताद्दशबुद्ध्यनु-
दयप्रसङ्गः नच शृङ्गंशशीयंवाच्यत्वंसमवायीतिभ्रमानन्तरमेव
ताद्दशबुद्ध्युपगमान्नदोषइतिवाच्यंशृङ्गंनशशीयं वाच्यत्वन्नस-
मवायीतिविशेषदर्शनदशायामपि तादृशप्रतीतेरानुभविकत्वा-
त्तदपलापेसर्वत्रैवतदपलापसम्भवात् । सोन्दलोपाध्यायमतस्या-
प्यद्धानिर्युक्तिकतापत्तेः । तादृशविशेषदर्शनकालीनतद्बुद्धेः शृङ्ग-
वाच्यत्वादौ शशीयत्वसमवायित्वाद्यभावावगाहिताश्वीकारेस-
र्वत्रैवतत्सम्भवेनतद्दोषतादवस्थ्यादितिचेत्सत्यम् । उक्तएवदी-
पक्षमतपरित्यागेवीजन्दीधिति कृतापिनविशिष्टज्ञानस्याभा-
वधीहेतुत्वादितिमूलं विशेषणतावच्छेदकप्रकारकविशेषणज्ञान-
कारणताबाधप्रदर्शनपरतयैव्याख्यातं अस्य चदोषस्य विशे-

षदर्शनदशायामाहार्यविशेषणतावच्छेदकप्रकारकविशेषणज्ञा-
नस्य सम्भवात् । तद्बलादेव व्यधिकरणधर्मावच्छिन्नप्रतियोगिता-
काभावप्रतीतिः सम्भवतीति । न चानाहार्यमेव विशेषणतावच्छेद-
कप्रकारकज्ञानं विशिष्टवैशिष्ट्यप्रत्ययहेतुर्गौरवात् । अत एव शङ्का
न पीत इत्यादिविशेषदर्शनवतापि प्रतारकेण पोतः शङ्खो न ना-
स्ति किन्तु द्वीपान्तरे इत्यादिवाक्यं प्रयुज्यते । न हि वाक्यार्थमजा-
नानस्य वाक्यरचना सम्भवति येन पोतः शङ्खो नास्तीत्याद्याकार-
कविशिष्टवैशिष्ट्यबोधमन्तरेणापि विशेषदर्शनवता तादृशवा-
क्यं प्रयोक्तव्यं यदि चानाहार्यमेव विशेषणतावच्छेदकप्रकारकज्ञानं
विशिष्टवैशिष्ट्यप्रत्ययहेतुः अन्यथा दण्डो रक्त इत्याद्याकारकाहार्य-
निश्चयानन्तरं रक्तारक्तदण्डो नास्तीत्याद्याकारकस्य विशेषणता-
वच्छेदकांशे संशयात्मकस्यापि विशिष्टवैशिष्ट्यबोधस्यापत्तेः । वि-
शिष्टवाक्यार्थबोधमन्तरेणापि तत्प्रकारकतद्विशेष्यकज्ञानत्वादि-
ना वाक्यार्थज्ञाने परकीयतादृशज्ञानेच्छया वाक्यप्रयोगः सम्भवती-
ति न प्रतारकस्य पोतः शङ्खो नास्तीत्यादिप्रतीतेरावश्यकतेति म-
न्यते तदापि न क्षतिः । वैशिष्ट्यप्रतियोगितांशे विशेषणतावच्छेदक-
विशेषितमवच्छिन्नत्वं यत्र संसर्गघटकतया भासते तत्रैव विशेषण-
तावच्छेदकप्रकारकज्ञानापेक्षया स्वावच्छिन्नप्रतियोगिताकानु-
योगित्वसम्बन्धेनाभावांशे शशीयत्वादिप्रकारकस्य शशीयतया-
शृङ्गं नास्तीत्याकारकव्यधिकरणधर्मावच्छिन्नप्रतियोगिताका-
भावप्रत्ययस्योक्तविशेषदर्शनदशायां निष्प्रत्यूहत्वात् । दण्डी चैत्रः
घटो नास्तीत्यादिविशिष्टवैशिष्ट्यबोधे तु दण्डत्वघटत्वाद्यवच्छिन्न-
प्रतियोगिताकत्वविशिष्ट एव संयोगानुयोगित्वादिसम्बन्ध इति
तत्र दण्डत्वघटत्वादिज्ञानापेक्षा । यदि च तत्रापि शुद्ध एव संयो-
गानुयोगित्वप्रतियोगित्वादेश्चाभावादौ दण्डघटादेः संसर्गः द-



ण्डत्वघटत्वादेस्तु स्वावच्छिन्नप्रतियोगिताकसंयोगः तथाविधानु-
योगित्वादिकं तत्र तथा तदा स्वावच्छिन्नप्रतियोगिताकत्वविशि-
ष्टसंसर्गावच्छिन्नाया विशेषणपारतन्त्र्येण विशेष्यनिरूपिततद्ध-
र्मप्रकारतायास्तच्छालिबुद्धावेव विशेषणतावच्छेदकप्रकारकज्ञानस्य
कारणता कल्पनीया शशीयतया शृङ्गं नास्तीत्यादौ चाभावांशे ता-
दृशसम्बन्धेन शशीयत्वादेः स्वातन्त्र्येणैव प्रकारता न तु विशेषणी-
भूतशृङ्गादिपारतन्त्र्येण तस्य शृङ्गादावविशेषणत्वात् तन्निरू-
पितप्रकारतानिरूपितप्रकारताया एव तत्पारतन्त्र्येण प्रकारता-
पदार्थत्वादित्युदारप्रकारमाकल्प्याभावप्रत्यये प्रतियोगिविशे-
षितापन्नस्यैव धर्मस्य प्रतियोगितावच्छेदकतया भानमनुभवसि-
द्धमित्युक्त्या प्रतियोग्यवृत्तिधर्मस्य प्रतियोगितावच्छेदकत्वं निरा-
कृतम् । अथैवमपि व्यधिकरणधर्मावच्छिन्नस्यैव प्रतियोगिनो व्य-
धिकरणधर्मावच्छिन्नाभावप्रतीत्या विषयीकरणे उक्तकारणबाध-
रूपबाधकस्य जागरूकतया 'अथावगाहत' इत्याशङ्कायामनु-
त्थितिरिति वाच्यम् । प्रमात्मकविशेषणतावच्छेदकप्रकारकज्ञा-
नादेव व्यधिकरणधर्मावच्छिन्नाभावप्रतीतिरुत्पत्स्यते विशेष-
दर्शनकालीनं शशीयतया शृङ्गं नास्तीत्याकारकं ज्ञानं शृङ्गा-
दौ शशीयत्वाद्यभावविषयकमेव यत्र बाधकं तत्रैव प्रतीतेरन्यवि-
षयकता न तु बाधकविरहस्थलेपि । अन्यथा यत्र यत्किञ्चिदव-
यवनाशान्महाघटनाशो नैयायिकादिसम्मतः तत्र तस्या एव अय-
म् घट इत्यादिप्रत्यभिज्ञायाः तज्जातीयत्वावलम्बनत्वमावश्यकमि-
ति सर्वत्रैव तदवलम्बनतासम्भवात् भेदावगाहितया प्रत्यभिज्ञा-
याः मिथ्यात्वे स्थैर्यमात्रोच्छेदप्रसङ्गादित्याशयेन तादृशशङ्का सम्भ-
वात् । अथ यदि वैशिष्ट्यांशे तद्धर्मावच्छिन्नप्रतियोगिकत्वावगाहि-
त्वं न बोधितधर्मप्रकारकं ज्ञानं हेतुस्तदा घटत्वादिनिर्विकल्पका-

नन्तरङ्घटत्वाद्यवच्छिन्न प्रतियोगिकत्वानवगाहिघटो नास्तीत्या-
कारकाभावप्रत्ययः कथं नोत्पद्यते नव्यमते अभावबुद्धौ प्रतियोगि-
तावच्छेदकप्रकारकप्रतियोगिज्ञानस्य पृथक्कारणताविरहादि-
ति चेन्न। तद्धर्मविशिष्टनिरूपितत्वे नवैशिष्ट्यानवगाहिनस्तद्धर्म-
विशेषितप्रतियोगिप्रकारकाभाव भानस्य क्वचिदप्यनभ्युपगमे-
नापाद्याप्रसिद्धेः। एतेन घटत्वावच्छिन्नप्रतियोगिताकाभा-
वे द्रव्यत्वादिविशिष्टवैशिष्ट्यस्या सत्त्वेऽपि केवलं विशेष्ये विशेषण-
मित्यादिरीत्या द्रव्यत्वादिविशेषितघटत्वादि प्रकारकतादृशा-
भावज्ञानापत्तेर्दुर्वारतया घटादिशून्ये द्रव्यान्तरवत्यपि द्रव्यन्ना-
स्तीत्याद्याकारकप्रत्ययापत्ति रित्यपि परास्तम्। अथ सोन्दलो-
पाध्यायमते पटत्वे न घटो नास्तीत्यादि व्यधिकरणधर्मावच्छिन्ना-
भाव बुद्धेर्घटत्वविशिष्टवैशिष्ट्या नवगाहितया घटत्वादि-
प्रकारकज्ञानजन्यतावच्छेदकानाक्रान्ततया घटत्वादिनिर्विक-
ल्पकोत्तरन्तादृशबुद्ध्यापत्तिः। अत्र केचित्। पटत्वादिना घटात्य-
न्ताभावस्य प्रतियोगितायाव्यधिकरणतया पटत्वादेरिव समाना-
धिकरणतया घटत्वादेरप्यवच्छेदकत्वं स्वीक्रियते इति तादृशबु-
द्धेर्घटत्वादिविशिष्टवैशिष्ट्यावगाहित्वमक्षतमेव घटत्वधर्मावच्छि-
न्नत्वे नैवतत्र प्रतियोगिताभानोपगमादिति नातिप्रसंगः। प्रति-
योगितावच्छेदकत्वञ्च उभयत्र व्यासज्यवृत्ति अतः प्रतियोगिताव-
च्छेदकघटत्वाद्यवच्छिन्नवति न तादृशाभावासत्त्वप्रसङ्गः। प्रतियो-
तावच्छेदकतापर्याप्त्यधिकरण समुदायावच्छिन्नेनैवसममभावस्य
विरोधोऽन्यथा महानसीयवह्नित्वाद्यवच्छिन्ना भावस्य वह्नित्वा-
द्यवच्छिन्नाधिकरणपर्वतादावसत्त्वप्रसङ्गात्। एतेन समानाधिक-
रणतया घटत्वादेस्तादृशाभावप्रतियोगि तावच्छेदकत्वे घटत्वा-
दिना घटादि मत्त्वोपलम्भस्य तादृशाभावबुद्धिविरोधित्वप्रसङ्ग-



त्यपि परास्तम्। प्रतियोगितावच्छेदकतापर्याप्त्यधिकरणप्रकारे-
ण प्रतियोगिमत्त्वोपलम्भस्यैवाभावबुद्धिप्रतिबन्धकत्वात्। अन्यथा
शुद्धवह्नित्वादिप्रकारेण वह्न्यादिप्रकारको पलम्भस्यापि महा-
नसीयवह्नित्वाद्यवच्छिन्नाभावधी विरोधितापत्तेः विरोधी च श-
शीयतया शृङ्गं नास्तीत्यादि व्यधिकरणधर्मावच्छिन्नाभावबुद्धेः श-
शीयत्वशृङ्गत्वादिसमुदाय प्रकारकशशशृङ्गवानयमित्याद्याका-
रको भ्रमात्मकप्रतियोग्युपलम्भ एव तस्य च प्रतिबध्यतावच्छेदक-
न्न वास्तवशशीयत्वशृङ्गत्वपर्याप्तप्रति योगितावच्छेदकताकाभा-
वविशिष्टबुद्धित्वं शृङ्गत्वाद्यवच्छिन्नप्रतियोगितायां शशीयत्वा-
द्यवच्छिन्नत्वभ्रमात्मकशशशृङ्गं नास्तीति प्रत्ययासंग्रहात्। कि-
न्तु प्रतियोगित्वांशे शशीयत्वशृङ्गत्वाद्यवगाह्यभावविशिष्टबुद्धि-
त्वमेव एवं च सर्ववादिसिद्धप्रतिबध्य प्रतिबन्धकभावेनैवोपप-
त्तिः। अथ शृङ्गत्वे न शृङ्गत्वोपलम्भस्य प्रतिबध्यतावच्छेदकं यदि-
प्रतियोगित्वांशे शृङ्गत्वा द्यवच्छिन्नत्वविषयकबुद्धित्वन्तदा शृङ्गवा-
नयमिति ज्ञानस्य शशीयतया शृङ्गं नास्तीति बुद्धिविरोधित्वन्दु-
र्वारमेव। यदि च शृङ्गत्वान्यधर्मावच्छिन्नत्वानवगाहित्वं तदा
शृङ्गं नास्ति शशीयं नास्तीति समूहालम्बनबुद्धौ तदविरोधित्व-
प्रसङ्ग इति चेन्न शृङ्गत्वाद्यवच्छिन्नत्वनिष्ठावच्छेदकताभिन्ना-
याऽवच्छिन्नत्वनिष्ठावच्छेदकता तदनिरूपकप्रतियोगितानिष्ठ-
सांसर्गिकविषयतायाः प्रतिबध्यताघटकत्वेनानुपपत्त्यभावा-
त् उक्तसमूहालम्बनज्ञानीयशृङ्गत्वाद्यवच्छिन्नप्रतियोगितानि-
ष्ठसंसर्गतायाः शशीयत्वावच्छिन्नसंसर्गतातो भिन्नतया शशीय-
त्वावच्छिन्नसंसर्गकतादृशज्ञानसंग्रहात्। न च शशीयतया शृ-
ङ्गं नास्तीत्यादौ शशीयत्व प्रकारतानिरूपितदर्शितपरम्परासं-
सर्गनिष्ठसंसर्गतान्तःपातिनी या प्रतियोगित्वीयसंसर्गतातो-

ऽन्यैव शृङ्गप्रकारतानिरूपितसंसर्गतान्तःपातिप्रतियोगित्वो-
यसंसर्गतासाचशशीयत्वावच्छिन्नत्वानवच्छिन्नैवेतिकथंत्र्यधिकर-
णधर्मावच्छिन्नाभावबुद्धेः शुद्धशृङ्गत्वे नशृङ्गोपलम्भाप्रतिबध्यते-
तिवाच्यम् । तादृशबुद्धौशृङ्गप्रकारतानिरूपितसंसर्गतान्तः-
पातिप्रतियोगित्वोय ससर्गतायाः शशीयत्वप्रकारतानिरूपि-
तावच्छिन्नत्वीयसंसर्गताख्यविषय तानिरूपितत्वस्वीकारात्त-
स्याउपदर्शितपरम्परासम्बन्धे नाभावां शशशीयत्वादिप्रकार-
तानिवर्ह्हिणप्रतियोगित्वादिसंसर्गताभेदेमानाभावात् । एवं
चशुद्धमणित्वावच्छिन्नाभावस्यैव दाहादिहेतुतयामण्यादिसमव-
धानकालेत्र्यधिकरणधर्मावच्छिन्नतदभावबलाद्दाहाद्यापत्तिरपि
परास्ताइतिवदन्ति । यत्तुतद्धर्मप्रकारतानिरूपितविशेष्यता-
पन्नादण्डादिनिष्ठ प्रकारताशालित्वरूपतद्विशिष्ट प्रकारक-
त्वावच्छिन्नबुद्धावेवतद्धर्मप्रकारकंज्ञानंहेतुः । ननु तदवच्छिन्न-
प्रतियोगिता कत्वविशिष्टसंसर्गकत्वमपिकार्य्यतावच्छेदककौ-
टौनिवेश्यतेदण्डत्वादिनिर्विकल्प कानन्तरञ्च दंडइत्याद्या-
कारकज्ञानम्प्रथमतउपेयते विशेष्येविशेषणमित्यादिरीत्यापि
दण्डोत्याकारकं ज्ञानन्तदनन्तरमेवचक्षणैकापलापेचति विर-
हात् तादृशविशेष्यतापन्ननिष्ठप्रकारताशालित्वन्तुतादृशविशे-
ष्यतया ऽवच्छिन्नातदभिन्नावायाप्रकारतातच्छालित्वमतोदंड-
त्वनिर्विकल्पकद्रव्यत्वादि प्रकारकज्ञानानन्तरोत्पन्नद्रव्यवान्द-
ण्डइत्याकारकताद्दृशविशेष्यता समानाधिकरणप्रकारताशा-
लिसमूहालम्बनेनव्यभिचारइतितत्तुच्छ । घटमानयेतिवाक्या-
त्कर्मत्वङ्घटीय मित्याकारकावान्तरवाक्यार्थज्ञान विनापि
विशकलितघटकर्मत्वादि सकलपदार्थविषयकसमूहालम्बनो-
पस्थि तिबलाद्विशेष्येविशे षणमितिरीत्याघटादि प्रकारता-



निरूपित विशेष्यतावच्छिन्नकर्मत्वादि प्रकारताशालिशा-
ब्दबोधस्यसर्वेशादिमिद्धस्यानुपपत्तेः । तत्रकर्मत्वादिप्रकारता-
याघटादिप्रकरतानिरूपित विशेष्यतानवच्छिन्नत्वेचकर्मत्वङ्घ-
टीयमानयनं सकर्मकमित्यादि समूहालम्बनात्ताद्दृशवैचित्र्या-
नुपपत्ति र्नहिविशेष्येविशेषण मितिरीत्याबोधस्समूहालम्बना-
दविलक्षणएवेतिवाच्यं तथासतितादृशबोधेएकवाक्यतानुपप-
त्तेः व्याप्तिघटकपदार्थानां विशकलितसमूहालम्बनोपस्थिति-
मूलकविशेष्येविशेषणमितिरीत्या परामर्शादनुमित्युत्पत्तेर्मि-
श्रादिसंमतायाश्चनुपपत्तेः । एवन्दीधितिकृतान्तादृशरीत्या-
जायमानायाः काञ्चनमयवह्निमान्पर्वत इत्येतादृशानुमितेः
काञ्चनमयत्वावच्छिन्नवह्न्यभाव निश्चयप्रतिबध्याया विशिष्टव
ह्निप्रसिद्ध्यनपेक्षत्वाभिधानासङ्गतेः । परंतु तद्धर्मविशिष्टप्रका-
रकबुद्धावेवतद्धर्मप्रकारकज्ञानंहेतुः । तद्विशिष्टप्रकारकत्वञ्च-
तदवच्छिन्नप्रकारकत्वंनतुतदवच्छिन्न प्रतियोगिताकत्वविशिष्ट-
संसर्गकत्वमपिकार्यतावच्छेदक कोटौनिविशतेविशिष्टनिरूपि-
तवैशिष्ट्यावगाहिज्ञानेतद्धर्मस्य प्रकारतावच्छेदकतानियमात्त-
त्रनियमतस्तद्धर्मप्रकारकज्ञानापेक्षयाघटत्वेन घटोनास्तीत्या-
दिबुद्धे घटत्वावच्छिन्नप्रतियोगिता कत्वानवगाहित्वेपिघटत्वा-
वच्छिन्नप्रकारतात्वेनघटत्वादिप्रकारकज्ञानजन्यतावच्छेदकाक्रा-
न्तत्वमक्षतमेवेतिनोक्तातिप्रसङ्गः । यथाविशेष्यांशेप्रकारकत्वमेव
नविशेष्यतावच्छेदकत्वं । तथासतिभूतलङ्घटवदित्यादौघटादेः
स्वस्यचभूतलत्वादिधर्मितावच्छेदकत्वापत्तेः । किन्तुविषय-
ताविशेषएवस्वचप्रकारताविशेषःप्रकारताभिन्नेत्यन्यदेतत् । त-
थाप्रकारतावच्छेदकत्वमपिविषयताविशेषः । ननु प्रकारांशेप्र-
कारतामेवतत् एवंच दंडत्वादिनिर्विकल्पकानन्तरंविशेष्येवि-

शेषणमितिरीत्याजायमानस्यदंडी त्याकारकज्ञानस्यदंडत्वादौप्रकारतावच्छेदकताख्यविषयता विशेषस्यानभ्युपगमात् नतदनुपपत्तिः घटत्वादिनिष्ठतादृशविलक्षणविषयतारहितस्यघटोनास्तीत्याकारकाभाव प्रत्ययस्यक्वचिदप्यनभ्युपगमात् नघटत्वादिनिर्विकल्पकानन्तरन्तदापत्तिः अत एवावच्छेदकतायाअव्यासज्यवृत्तित्वे महानसीयवह्निमान्नास्तीत्याद्याकारकाभावप्रत्ययस्य महानसीयत्वाद्यवच्छिन्नप्रतियोगिकत्वावगाहित्वं नसम्भवति । महानसीयत्वादेर्वह्नित्वादिनिष्ठायाम्प्रतियोगितावच्छेदकतायामिव सामानाधिकरण्यप्रत्यासत्याऽवच्छेदकत्वात् तथाचतस्य महानसीयत्वादिविशिष्ट वैशिष्ट्यानवगाहितयावह्न्यादौ महानसीयत्वादिप्रकारकज्ञानशून्यकालेआपत्तिः न च वह्नित्वविशिष्टमहानसीयत्वादेरपि महानसीयवह्न्याद्यभाव प्रतियोगितायांविनिगमनाविरहात्अवच्छेदकतया ऽवच्छेदकताया अव्यासज्यवृत्तित्वेपिकथित प्रत्ययस्य महानसीयत्वावच्छिन्नप्रतियोगिताकत्वावगाहित्वं सम्भवतीतिवाच्यम्अवच्छेदकतायाअव्यासज्यवृत्तित्वे विनिगमनाविरहात्तत्रोभयस्य प्रतियोगितावच्छेदकत्वेऽपि अवच्छेदकभेदेनप्रतियोगिताभेदादेकस्याः प्रतियोगितायाउभयधर्मावच्छिन्नत्वभानासम्भवात् तादृशाभावबुद्धेर्वह्नित्वमहानसीयत्वोभयावच्छिन्नप्रतियोगितानिष्ठसंसर्गताकत्वघटितवह्नित्वधर्मितावच्छेदककमहानसीयत्वप्रकारकज्ञानजन्यतावच्छेदकाक्रान्ततायाघटयितुमशक्यत्वात् नचवह्नित्वावच्छिन्नत्वविशिष्टप्रतियोगितासंसर्गकत्वेसतिमहानसीयत्वावच्छिन्नत्वविशिष्टप्रतियोगितासंसर्गकत्वस्यतादृशज्ञानजन्यतावच्छेदकत्वोपगमात् महानसीयवह्निर्नास्तीत्यादौ च तादृशधर्माभ्याम-



त्येकमवच्छिन्नस्यप्रतियोगिताद्वयस्यैव संसर्गतोपगमेन नदोषइतिवाच्यम् । तादृशधर्मस्यजन्यतावच्छेदकत्वेमहानसीयोनास्तिवह्निर्नास्तीतिसमूहालम्बनबुद्धौ तथा विधज्ञानस्यव्यभिचारादुर्वारतांवातत्रकथंचिदव्यभिचारः । तथापिसुरभिजलन्नास्तीत्यादौअगतिरेवतत्रजलत्वावच्छिन्नसौरभादेःपरम्परासंबंधेनैवावच्छेदकतायावक्तव्यतयासौरभविशिष्टजलत्वादेः साक्षात्सम्बन्धेनावच्छेदकत्वेलाघवस्यैवविनिगमकत्वात् सौरभादेःप्रतियोगितानवच्छेदकतयातदवच्छिन्नप्रतियोगिताकत्वावगाहित्वासंभवात्इत्यनुपपत्तिरपिसमाहिता। उक्तप्रतीतेर्महानसीयत्वावच्छिन्नप्रतियोगिताकत्वानवगाहनेपि महानसीयत्वादेः प्रकारतावच्छेदकतयातत्प्रकारकज्ञानसापेक्षत्वात्। अथतद्धर्मावच्छिन्नप्रतियोगिताकत्वानवगाहिन्यभावप्रत्यये तद्धर्मस्यप्रतियोगिनिष्ठप्रकारतयाअवच्छेदकत्वोपगमेवह्न्यादिसामान्याभावबोधेपिमहानसीयत्वादिप्रकारतायाभासतामितिचेत् । इष्टमेवैतत्सोन्दलोपाध्यायमतानुयायिनां, तन्मते प्रतियोगितावच्छेदकप्रकारेणैवप्रतियोगिनोभानमितिनियमस्यासिद्धेः । अथैवम्महानसीयवह्न्यभावप्रत्ययस्यवह्न्याद्यंशे उपलक्षणविधयामहानसीयत्वावगाहिनोवह्न्यादिसामान्याभावप्रत्ययस्यचाविलक्षणतया महानसीयत्वाद्यविषयकवन्हि मानयमित्यादिबुद्धौ तयोर्द्वयोरेवप्रति बन्धकत्वमप्रतिबन्धकत्वंवास्यात् नतुप्रथमस्यातथात्वन्द्वितीयस्य च तथात्वमिति चेत् अनुयुज्यंतेतदाकर्णयतामवधानपरेण महानसीयवन्हित्वाद्यवच्छिन्नाभावबुद्धौअवच्छेदकतायाअव्यासज्यवृत्तित्वकल्पे महानसीयत्वावच्छिन्नत्वविशेषितावच्छेदकतानिरूपकत्वं प्रतियोगितांशेभासतेवह्निसामान्याभावबोधे च महानसीयत्वाद्यवच्छिन्नत्वनावच्छेदकता याभासते

इतिविशेषः । नच प्रतियोगितावच्छेदकांशेविशेषणतापन्नस्यैव
प्रतियोगितावच्छेदकतावच्छेदकत्वम्भासत इतिनियमः । यथा-
दण्डीनास्तीत्यादौ दण्डत्वादेरित्यश्चमहानसीयवह्निर्नास्ती-
त्यादौवन्हित्वांशेऽविशेषणस्य महानसीयत्वादेःकथन्तथाभान-
मितिवाच्यम् सोन्दलमतेसमवायितयावाच्यत्ववानित्यादि भेद-
प्रत्ययेप्रतियोगितावच्छेदकांशेऽविशेषणस्यापिसमवायित्वादेः
प्रतियोगितावच्छेदकतावच्छेदकत्वभानेनतादृशनियमस्यासिद्धेः
अन्यमते आश्रयतासम्बन्धेनावच्छेदक तावच्छेदकत्वस्य भान-
एवतथानियमोन तु सामानाधिकरण्य प्रत्यासत्यवच्छिन्नस्य
तस्यभानेतादृशं चावच्छेदकतावच्छेदकत्वमवच्छेदकविशिष्टे विशे-
षणतापन्नएवभासतेइतिनियमःअतोवन्हिर्नास्तीत्याकारकप्र-
तीतौमहानसीयत्वविशिष्टवह्नित्वावच्छिन्नप्रतियोगिता कत्वन्न-
भासते इतिनपर्वतादौवन्हिर्नास्तीत्याकारकप्रतीत्यापत्तिः एवं
व्यधिकरणधर्मावच्छिन्नाभावानभ्युपगन्तृमते प्रतियोगितावच्छे-
दकधर्मप्रकारेणैवप्रतियोगिभाननियमेपि साक्षात्परम्परासा-
धारणप्रतियोगितानिरूपितमवच्छेदकत्वमेव विवक्षितन्तच्चा-
वच्छेदकतावच्छेदकसाधारणमिति नदोषः । एवंघटोभविष्यति
घटोनष्ट इत्याकारकप्रागभावध्वं सप्रतीतौघटत्वादेरतिप्रस-
ङ्गतयाध्वंसप्रागभावप्रतियोगितानवच्छेदकत्वेन उपलक्षणतये-
वप्रतियोग्यंशेभानात् तद्विशिष्टवैशिष्ट्यानवगाहितयाघटत्वा-
दिनिर्विकल्पकानन्तरन्तदापत्तिरित्यप्यपिईदृशप्रकारानुसरण-
मन्तराऽशक्यवारणमेव एवमनुयोगितावच्छेदकप्रकारकज्ञान
स्यापितद्धर्मनिष्ठधर्मितावच्छेदकताकबुद्धावेव हेतुतानतुतद्ध-
र्मविशिष्टानुयोगिकत्वावच्छिन्नसंसर्गताकत्वमपि कार्यतावच्छे-
दककोटौनिवेशनीयंगौरवात् तद्विशिष्टानुयोगिकत्वा वच्छिन्न



संसर्गकबुद्धौतद्धर्मस्य धर्मितावच्छेदकत्वनियमादेव तादृशबुद्धौ
नियमतस्तद्धर्मप्रकारज्ञानापेक्षोपपत्तिः । दण्डादिविषयक
निर्विकल्पकानन्तरन्दण्डीत्याकारकज्ञानोत्पत्ताविवक्षणैकवाक्या-
जेन एकवद्वयमिति रीत्यापि दण्डकुण्डलाद्युभयप्रकारकद-
ण्डादिधर्मितावच्छेदकक ज्ञानमुत्पद्यतेदण्डी कुण्डलीत्यादि-
वाक्याच्चैत्रत्वावच्छिन्नविशेष्य कदण्डसम्बन्धादि प्रकारकावा-
न्तरवाक्यार्थज्ञानरहितस्यपुंसः खलेकपोतन्यायेनजायमानाया
मन्वयबुद्धौ दण्डसम्बन्धादेर्नकुण्डलसम्बन्धादिधर्मिता वच्छे-
दकत्वमुपगम्यते अपितुचैत्रत्वादा वेवतदुभयधर्मितावच्छेद-
कत्वंचैत्रत्वादेः पदार्थतावच्छेदकतया तत्प्रकारकपदार्थोपस्थि-
स्थितेः खलेकपोतन्यायेनापिबोधस्यप्राक् सत्वनियमात्तावतैवा
न्वयबोधस्यसधर्मितावच्छेदकत्व नियमोपपत्तेः । एवञ्चसंशये
धर्मितावच्छेदकप्रकारकज्ञानस्य स्वतंत्रहेतुताकल्पनेनापिलाघ-
वंघन्यथागन्धप्रागभाववान् गन्धवान्नवागोसदृशोगवयपदवा-
च्योनवाद्रव्यवृत्तिर्गुण वृत्तिर्नवेत्याकारकसंशयेषु गन्धप्रागभाव-
गोसादृश्यद्रव्यवृत्तित्वाद्युपलक्षितेधर्मिणि कोटिवैशिष्ट्यावगा-
हिषुविशिष्टानुयागिकवैशिष्ट्या नवगाहितयाऽनुयोगितावच्छेद-
कप्रकारकज्ञानजन्यतावच्छेदकानाक्रान्तेषु तत्तद्धर्मितावच्छेदक-
ज्ञानानांस्वातन्त्र्येणहेतुताकल्पनस्यावश्यकतापत्तेः । एवं वि-
शेष्यताप्रकारतेविषयतात्वेनाननुगमय्यतद्धर्मवृत्तिविषयतावच्छेद-
कताकबुद्धित्वमेव तद्धर्मप्रकारकज्ञानजन्यतावच्छेदकमङ्गीकार्यं-
मित्येकैवविशेषणताऽनुयोगितावच्छेदकं प्रकारकज्ञानयोर्द्वि-
विधविशिष्टवैशिष्ट्यबोधहेतुताइत्यपिलाघवात् तद्धर्मप्रकारक-
ज्ञानशून्यकालीनतद्धर्मविशिष्टसंसर्गकबुद्धौ तद्धर्मस्यसांसर्गिक-
विषयतानिरूपित विषयताविशेषात्मकमवच्छेदकत्वन्नस्वीक्रियते

दण्डत्वादिनिर्विकल्पकानन्तरं जायमानायां दण्डीत्यादि बुद्धौ
दण्डत्वादेः प्रकारतावच्छेदकतात्मकविषयताविशेषवत् एवञ्च प्र-
तियोग्यंशे प्रकारतापन्नस्य व्यधिकरणधर्मावच्छिन्नाभावप्रतियो
गितानवच्छेदकत्वेऽपि न क्षतिः। इत्यभिसन्धायैव दीधितिकारः
चक्रवर्त्तिलक्षणे व्यधिकरणधर्मावच्छिन्नसाध्याभावसामान्यमुपे-
क्ष्य ह्रदत्ववह्नित्वाभ्यां वह्निर्नास्तीत्यादिप्रत्यय विषयाभावमव-
च्छेदकतापर्य्याप्तिनिवेशन प्रयोजनप्रदर्शनायानुसृतवानित्याहुः
अन्ये तु विशिष्टपर्य्याप्तप्रकारताकत्वं विशेषणतावच्छेदकप्रका-
रकज्ञानजन्यता वच्छेदकं दण्डत्वादि निर्विकल्पकानन्तरोत्प-
न्नस्य दण्डीत्या कारकज्ञानस्य पुरुषविशेष्यतानिरूपितप्रका-
रतायाश्च दण्डत्वादावेव पर्य्याप्ता न तु दण्डत्वादिरूपविशेषणा-
न्तर्भावेन तत्पर्य्याप्तिः। अभावबुद्धौ प्रतियोगिनिष्ठप्रकारताया
स्तद्विशेषणीभूतधर्मान्तर्भावेन पर्याप्तिनियमात् घटत्वेन घटो ना-
स्ति घटो भविष्यति घटो नष्ट इत्यादि बुद्धेर्घटत्वादिविशिष्टनिरूपि
तत्वावच्छिन्नसंसर्गानवगाहित्वेऽपि न घटत्वादिनिर्विकल्पका-
नन्तरमापत्तिः। अथ पुरुषादिनिष्ठविशेष्यतानिरूपित प्रकार-
ताया दण्डत्वाद्यन्तर्भावे न पर्याप्तौ न कथं दण्डी पुरुष इत्यादि-
बुद्धेः पुरुषाद्यंशे दण्डत्वादिप्रकारकतया भ्रमत्वापत्तिः। न
वा पुरुषो न दण्ड इत्यादिविपरीतज्ञान प्रतिबध्यत्वं तदभाववती
तरविशेषणताना पन्नतद्धर्मप्रकारकत्वस्य भ्रमत्व स्वरूपत्वे ध-
र्मिणि इतरविशेषणतानापन्न तद्धर्मप्रकारकत्वस्य हि तद्विरो-
धिज्ञानप्रतिबध्य तावच्छेदकत्वे चाभावांशे स्वावच्छिन्नप्रतियोगि-
ताकत्वसम्बन्धेन प्रतियोगिरूपविशेष्यपारतन्त्र्येण प्रमेय
त्वप्रकारकतया प्रमेयं नास्तीत्यादि बुद्धेर्भ्रमत्वानुपपत्तिः त-
दंशे तादृशसम्बन्धेन प्रमेयत्वादेर्बाधग्रहेऽपि तादृशबुद्ध्यापत्ते



श्चेति चेन्न तन्मात्रपर्याप्तप्रकारता यास्तत्तत्पनिवेशेनैवोपपत्तेः
इतरविशिष्टतद्धर्मवैशिष्ट्यावगाहिबुद्धौ अव्यासज्यवृत्तेरपि प्रकार
तायास्तद्धर्मे स्वीकारेणैव तस्याः तद्धर्माभावनिश्चयप्रतिबध्यत्व
निर्वाहकत्वादीदृशी च प्रकारता निर्विकल्पकानन्तर जातबुद्धावेव ज्ञा-
नायदि च केवलं विशेष्ये विशेषणमित्यादिरीत्या बुद्धेर्विषयतानवि
शिष्टवैशिष्ट्यधीत्वव्यापिका तदा तद्धर्मविशेष्यतापन्नवृत्ति तदीय-
प्रकारतैव तत्तत्पनिवेश्यते तन्निरूपितविशेष्यताभिन्नत्वन्तन्नि-
रूपितविशेष्यतानवच्छिन्नत्वं वा वृत्यन्तार्थः। दण्डी पुरुष इत्यादि-
विशिष्टवैशिष्ट्य बोधीयदण्डत्वादि विशिष्टपर्याप्त प्रकारता-
दण्डत्वादिप्रकारतानि रूपितविशेष्यता रूपातदवच्छिन्नैव वा
अत एवविशिष्टघटकतद्विशेष्यविशेषणसम्बन्धानां विशेष्यवि-
शेष्यभावे वैपरीत्येऽप्यविलक्षणतया तत्तद्वैपरीत्ये विशिष्टप्रका-
रताया वैलक्षण्यानुपपत्तिरित्यपि समाहितं उक्तादिशाऽवा-
न्तरविशेष्यविशेषणभाववैलक्षण्यस्य विशिष्टपर्याप्तविषयतावै-
लक्षण्य निर्वाहकत्वान्नोक्तातिप्रसङ्गः। एतेनाभावबुद्धेः प्रति-
योगिकोटौ विशेष्ये विशेषणमितिरीत्या विषयत्वस्याप्रामाणि-
कत्वेऽपि कस्याश्चित्तस्याः प्रतियोगिवैशिष्ट्यांशे भ्रमत्वमुपपद्यते
तत्तद्विशेषणतावच्छेदकप्रकारकज्ञानस्यापि तद्धर्मवृत्तिः सती
तद्धर्मप्रकारतानिरूपितविशेष्यतापन्नवृत्तिर्या प्रकारता तच्छा-
लिबुद्धित्वमेव जन्यतावच्छेदकमतो लोहितवह्निमानित्यादौ
लौहित्यविशिष्टवह्न्यप्रसिद्धावपि न क्षतिः। न वा इतरविशि-
ष्टतद्धर्मवैशिष्ट्यबुद्धौ तद्धर्मप्रकारकधियो व्यभिचार इति वदन्ति।
इमौ च द्वावेव पन्थानौ विशेषणावच्छिन्नाविशेष्यविशेषणयोर्व्या-
सज्यवृत्तित्वाव्याप्तिर्विशिष्टव्यासज्यार्थः इत्यभिहितवन्तस्माणिकारं-
यावद्विशेषाभावाधिकरणवृत्तित्वरूपविशेषणान्तर्भावेन सामा-

न्यधर्मावच्छिन्न प्रतियोगिताकत्वस्य पर्याप्तिस्ताहशाधिकरणवृ-
त्तित्वन्तदवच्छेदकं नेति वदन्तन्दीधिति कारमप्यनुसरत इति
न सिद्धान्तविरोधमावहतः अनयोरुपादेयानुपादेयताप्रयोजक-
विशेषः स्फुट एवेति स्वयमूहनीयं । अथ विशिष्टनिरूपितविल-
क्षणसंसर्गानवगाहिज्ञाने केवलं विशेष्ये विशेषणमिति रीत्या वि-
षयतातो विलक्षणायां विशिष्टवैशिष्ट्यविषयतायाम्मानाभावः ।
विशेषणतावच्छेदकप्रकारक ज्ञानजन्यतावच्छेदकस्योपदर्शिता
भावधीसाधारण्यानुरोधेन तत्सिद्धिरितितु नाशङ्कनीयम् तथात
त्वसाधारण्यविरहेपि अभावबुद्धौ प्रतियोगिविशेषणीभूतधर्मप्र-
कारकधियः अतन्त्रहेतुतया तद्धर्मादिविषयकनिर्विकल्पकानन्त
रन्तद्धर्मविशेषितप्रतियोगिकनाशादि प्रत्यक्षस्य वारणसम्भवात्
लाघवेन विलक्षणविषयतासिद्धेः सिद्धान्तविरुद्धत्वात् ज्ञानाका
रावेलक्षण्ये नानुभवस्य सन्दिग्धत्वादितिचेन्न । यतो विशिष्टनि-
रूपितविलक्षणसंसर्गावच्छिन्नप्रकारतायास्संयोगादिसंसर्गावच्छि
न्नप्रकारतातोऽतिरिक्तत्वमस्सर्वेषामविवादः । पटो नष्टः पटत्वेन
घटो नास्तीत्यभावबुद्धेरपि अनुयोगिता विशेषसंबन्धावच्छि-
न्नप्रकारताविशेष्यांशेसोपि निर्विकल्पकानन्तरं जायमानघट-
वद्भूतलमित्यादि ज्ञानीयघटादि प्रकारतातोऽतिरिक्त एवे-
तिच मतं अभावबुद्धौ प्रतियोगिविशेषणधर्मप्रकारकधियः ज्ञात
त्वेऽहेतुताऽकल्पनानुरोधेन ताहशप्रकारताया विशेषणांतर्भा-
वेन पर्याप्तिः तदवच्छिन्नत्वं वा कल्प्यते न त्वतिरिक्तविषयतेति ।
घटत्वादिप्रकारकज्ञानोत्तर जायमानतद्विशिष्टप्रतियोगित्वा-
वच्छिन्नवैशिष्ट्यांश वमाच्छिभूतलं घटवदित्यादिज्ञाने यथा
घटादिप्रकारतातथा तादृश वैलक्षण्यं नास्माभिरुपगम्यते येन घ
टादिनिर्विकल्पकानन्तरं जाय मानतथाविधविषयतातोऽतिरि-



विषयतातत्त्वापद्येत । अथ तद्धर्मप्रकारतानिरूपितविशेष्यता
पन्नप्रकारकबुद्धित्वमेव तद्धर्म प्रकारकधीजन्यतावच्छेदकमस्तु
किं वैलक्षण्यकल्पनया सर्वत्र घटवदित्याकारकज्ञानं घट इत्या-
कारकज्ञानपूर्वकमेवास्तु एकपदार्थविशेष्यकापरपदार्थ प्रका-
रकशाब्दबोधोपि सर्वत्रावांतरवाक्यार्थ ज्ञानपूर्वक एवास्ताम्,
अस्तु प्रत्यक्षत्वमेव तज्जन्यतावच्छेदकं एवं च महानसीयत्वादिवि-
शिष्टबुद्धेः प्रागनुपस्थितावपि विशिष्टलाघवोपनीतमहानसीय
त्वविशेषितवह्निविशेष्यकानुमित्युत्पादेपि न क्षतिरितिचेन्न ।
घटवादित्याकारकविशिष्ट वैशिष्ट्यानवगाहिज्ञानपूर्वं सर्वत्र घट
इत्याकारकव्यक्तीनामनन्तानां कल्पना पेक्षयोक्तवैलक्षण्यकल्प-
नाया एवोचितत्वात् घटत्वादि प्रकारतानिरूपितविशेष्यतापन्न
निष्ठप्रकारतायाघटत्वादि वृत्तित्वानिवेशेन लाघवमेतन्मते ।
ज्ञानकल्पनागौरवं फलमुखमितिचेत् अस्तु व्यासज्यवृत्तिविष-
यतापक्षीयकार्यतावच्छेदकापेक्षयै तन्मतकार्यतावच्छेदकं लघु-
विशेषणावच्छिन्नप्रकारताकल्पेतु एतन्मतापेक्षया पिकार्यतावच्छे-
दकलाघवमित्यलमतिविस्तरेण । विशिष्टवैशिष्ट्यबोधो द्विविधः
अनवच्छिन्नविशेषणतावच्छेदकताकोऽवच्छिन्नविशेषणतावच्छेदक
ताकश्चतत्रानवच्छिन्नदण्डत्वादिविशेषणता वच्छेदकताकदण्डी
त्यादिबोधे स्वरूपतो दण्डत्वादिप्रकारकं ज्ञानं हेतुः । अन्यथा
जातित्वादिना दण्डत्वादि प्रकारकजातिमानित्यादिज्ञानाद्द-
ण्डीत्यादिविशिष्टवैशिष्ट्यबोधापत्तेः । न च स्वरूपतो दण्डत्वादि
प्रकारकबोधे स्वरूपतो दण्डत्वादि विषयकज्ञानस्य हेतुतया ता-
दृशकारणाभावादेव नोक्तापत्तिरितिवाच्यं । यत्र दंडत्वादिनिर्वि-
कल्पकद्वितीयक्षणे जातित्वेन दंडत्वप्रकारकस्मरणं तदुत्तरन्ताहश
बोधापत्तेर्दुर्वारत्वात् किञ्चिद्धर्मावच्छिन्नविशेषणतावच्छेदकताक

दंडिमानित्यादिबोधेचविशेषणतावच्छेदकतावच्छेदक प्रकारे-
णविशेषणतावच्छेदकप्रकारकज्ञानंहेतुः। यत्रद्रव्यत्वादिनादंडा
दिप्रकारकज्ञानंदंडत्वादिनादंडादिमुख्यविशेष्यकज्ञानंचवर्त्तते
तत्रदंडिमानित्याकारकविशिष्टवैशिष्ट्यबोधानुदयात् तत्रचवि
शेषणतावच्छेदकीभूततद्दंडादिविषयता मनिवेश्यदंडत्वादि
प्रकारतानिरूपितप्रकारताशालिज्ञानत्वेनैवहेतुत्वं तथाचदं
डत्वादिनादंडान्तरज्ञानादपि अपूर्वदंडादिविषयकदंडिमा-
नित्यादिविशिष्टवैशिष्ट्यबोधोजायतइति सामान्यलक्षणप्रत्यास
त्तिमनंगीकुर्वन्तोनवीनावदन्ति। यत्रविशेषणतावच्छेदकताव-
च्छेदकंदंडत्वादिकमपिकिंचिद्धर्मावच्छिन्नं तत्रापीदृशोरीतिरनु
संधेया। एतादृशदिशाविशिष्टानुयोगिकवैशिष्ट्यबोधेतद्धेतुवि-
शेष्यतावच्छेदकप्रकारकज्ञानयोर्विशेषोयस्सेयः। एवं विशिष्ट
वैशिष्ट्यबोधः क्वचिद्विशेषणतावच्छेदकांशेनिर्द्धर्मितावच्छेदककः
यथादंडवानित्यादितत्रदण्डत्वादि रूपविशेषणतावच्छेदकस्य
धर्मितावच्छेदकतावच्छेदकमुद्रयाकस्याप्यभानात् क्वचित्तदंशेस
धर्मितावच्छेदककः यथारक्तत्वदंडत्वादिनानाधर्मावच्छिन्नविशेष
णताकः रक्तदंडवानित्यादिबोधःतत्रदंडत्वादि रूपविशेषण
तावच्छेदकस्यरक्तत्वाद्यपर विशेषणतावच्छेदकधर्मितावच्छेदक
मुद्रयाभानात् तत्रचफलीभूतज्ञानेयद्धर्मधर्मितावच्छेदकीकृत्य
विशेषणतावच्छेदकभानंतद्धर्मधर्मितावच्छेदक कविशेषणता
वच्छेदकप्रकारकज्ञानहेतुः। एवंतत्रदंडत्वादिनिष्ठधर्मिताव
च्छेदकताकरक्तत्वादि प्रकारकज्ञानत्वेन हेतुताजन्यतावच्छेदकं
चदंडत्वादिरूपधर्मितावच्छेदककविशिष्ट विशेषणतापन्नरक्त
त्वादिविशिष्टवैशिष्ट्यबुद्धित्वं तदर्थञ्चदंडत्वादिनिष्ठधर्मिताव-
च्छेदकतानिरूपकरक्तत्वादि प्रकारतानिरूपितायारक्तत्वाद्यव



च्छिन्नप्रतियोगिताकत्वावच्छिन्नसंसर्गतानिरूपकप्रकारतातच्छा
लित्वंयत्रपरस्परविशेषण विशेष्यतावच्छेदक भावानापन्नतु-
च्छकचरक्तत्वदंडत्वाद्युभय विशिष्टदंडादेर्वैशिष्ट्यं भासतेयत्र-
वादंडत्वादि धर्मितावच्छेदक तापन्नरक्तत्वादि विशिष्टस्यवैशि
ष्ट्यंभासते तत्रव्यभिचारवारणायदंडत्वादिनिष्ठ धर्मितावच्छेद
कतानिरूपकत्वं रक्तत्वादिप्रकारताविशेषणमुपात्तंकेवलं विशे-
ष्येविशेषणमिति रीत्याजायमाने रक्तदंडवानित्यादिबोधेव्यभि
चारवारणायनिरुक्तसंसर्गतानिरूपकत्वं रक्तत्वादिप्रकारतानि
रूपितप्रकारताविशेषणमुपात्तं। एवमनुयोगितावच्छेदकांशे
सधर्मितावच्छेदकविशिष्टानुयोगिक वैशिष्ट्यबोधेसधर्मितावच्छेद
कानुयोगितावच्छेदक प्रकारकज्ञानस्य हेतुताकल्पनीयाकेव
लंविशेष्येविशेषणमित्यादिरीत्यायोरक्त दंडवानित्यादिबोध
स्तद्व्यावृत्तविशिष्टपर्याप्त प्रकारताविशेषस्य विशिष्टवैशिष्ट्य
बोधस्वीकारपक्षे रक्तत्वादिप्रकारतानि रूपितदंडत्वाद्यवच्छिन्न
विशेष्यतयावच्छिन्नातद्भिन्नावाया दंडत्वसाधारणप्रकारतात-
च्छालिबुद्धित्वं विशेषणतावच्छेदकतारूप विषयताविशेषस्य
विशिष्टवैशिष्ट्यबोधीयस्य रक्तत्वादावभ्युपगमपक्षेतुदंडत्वादि-
निष्ठधर्मितावच्छेदकतानिरूपकप्रकारत यावच्छिन्नायातद्भि-
न्नावा यातादृशविलक्षण रक्तत्वादिप्रकारतातच्छालिबुद्धित्वमे-
वजन्यतावच्छेदकं एवंचरक्तोदंडोमेद्यइत्यादि विशिष्टानुयोगिक
वैशिष्ट्यबोधस्साधारण्यमपि जन्यतावच्छेदकतादृशरूपस्येतिन
तादृशबोधेकारणत्वांतरंकल्प्यं दंडोरक्तोनवेतिसंशयानंतरंरक्त-
दंडवानित्यादिबोधस्यानुभवविरुद्धतया विशेषणतावच्छेदकांशे-
सधर्मितावच्छेदकविशिष्टवैशिष्ट्यबोधजनकतावच्छेदकगर्भेनिर्ध-
र्मत्वन्निवेश्यत इतिदीधितिकारः। तन्मतेदंडादौरक्तत्वादिरूप-

विशेषणसंदेहाधीनो रक्तदंडवान्नवा पुरुष इति बोधः केवलं विशे-
ष्ये विशेषणमिति रीत्यैव जायते न तु रक्तत्वादिविशिष्टदंडत्वावच्छि-
न्नवैशिष्ट्यावगाहीति न तदनुपपत्तिः । अथ तद्धर्मविशिष्टप्रतियो-
गिप्रकारकाभावबुद्धेः तद्धर्मविशिष्टवैशिष्ट्यावगाहित्वनियमात्के-
वलमभावांशे केवलं विशेष्ये विशेषणमिति रीत्या रक्तत्वादिविशिष्ट-
दंडादिरूपप्रतियोगिनः प्रकारतया भानं न वाभावबुद्धेः किंचि-
द्धर्मविशिष्टप्रतियोगिवैशिष्ट्यावगाहित्वमेव नियतं तथा च तमे-
व तादृशबुद्धेर्दण्डत्वादिविशिष्टवैशिष्ट्यावगाहितायाः सत्वात् न
नु प्रतियोगिविशेषणीभूतयावद्धर्मविशिष्ट वैशिष्ट्यावगाहित्वम-
पि तथा, तथा च तस्या रक्तत्वादिविशिष्टदंडत्वाद्यवच्छिन्नवैशिष्ट्या-
वगाहित्वविरहेऽपि न क्षतिरिति वाच्यं केवलं विशेष्ये विशेषणमि-
त्यादिरीत्यापि यत्किञ्चिद्धर्मविशिष्टप्रतियोगिनोऽभावांशे विशेषण-
त्वोपगमे दंडादिसामान्याभावबुद्धावपि उपलक्षणतया रक्तत्वा-
देः प्रतियोगिविशेषणतया भानापत्तेः । तथा चाभावांशे रक्तत्वोप-
लक्षितदंडत्वावच्छिन्नप्रतियोगिताकत्वावगाहिनो रक्तदंडाभा-
ववानित्याकारकस्य ज्ञानस्यापि दंडवानित्यादिविशिष्ट बुद्धि-
प्रतिबंधकत्वांतरकल्पनापत्तेः । रक्तत्वादिनिर्विकल्पकदशाया-
मपि रक्तदंडो नास्तीत्यादिबुद्ध्यापत्तेश्चेति चेत्सत्यं विशेषणसंदे-
हाधीनविशिष्ट संदेहे केवलं विशेष्ये विशेषणमित्यादिरीत्या रक्त-
त्वादिविशिष्टस्य प्रतियोगिनोऽभावांशे विशेषणतया न भानमुपे-
यते किंतु तत्र मिथो विशेषणविशेष्यतावच्छेदकभावमनापन्नदंड-
त्वरक्तत्वाद्युभयविशिष्टप्रतियोगिनिरूपितवैशिष्ट्यमेवाभावांशे
भासते तादृशविशिष्टवैशिष्ट्यबोधस्य च विशेषणतावच्छेदकांशे
निर्द्धर्मितावच्छेदकतया न तत्र विशेषणतावच्छेदकप्रकारकनिर्ण-
यापेक्षेति । न चैवं दंडो रक्तो नेत्यादिबाधनिर्णयदशायामपि रक्त



दंडत्वावच्छिन्नसंशयापत्तिः समानधर्मितावच्छेदकज्ञानस्यैव
बाधादिप्रतिबध्यतया निरुक्तसमकक्षरक्तत्वदंडत्वाद्युभयविशेष-
णविशिष्टदंडादिवैशिष्ट्यबुद्धेस्तदप्रतिबध्यत्वादिति वाच्यं तथा
विधरीत्योभयविशेषणविशिष्टदंडादिसंशयस्य बाधदशाया-
मिष्टत्वात् वस्तुतस्तु दंडत्वसामानाधिकरण्येन रक्तत्वनिर्णय-
दशायामेव दंडत्वावच्छेदेन रक्तत्वं तत्सामानाधिकरण्यमात्रेण च
रक्तत्वाभावमवगाहमानात्संशयात् दंडत्वसामानाधिकरण्येन र-
क्तत्वावगाहि रक्तदंडवान्न वेति संशय उत्पद्यते तथाविधनिर्णयस्य
तादृशरक्तत्वाभावकोटिकसंशयाविरोधि तया तयोरेकदा स-
त्वमविरुद्धमेवं च दंडत्वावच्छेदेन रक्तत्वाभावकोटिकसंशयाधी-
नो रक्तदंडवान्नवा पुरुष इत्याकारक संशयो सिद्ध एव एवं दंडत्वा-
वच्छेदेन रक्तत्वावगाही विशेषणसंदेहाधीन तथाविधसंशयोपि
तथैवेव सारं, दंडत्वावच्छेदेन रक्तत्वनिर्णये दंडत्वावच्छेदेन रक्त दं-
डवत्तानिर्णयस्यापि संभवात् दंडवान्पुरुष इत्येतादृशनिर्णयद-
शायां विशिष्टसंशयविरोधिविशेषदर्शनसमवधानसंभवान्नवि-
शिष्टसंशयसंभव इति दण्डत्वावच्छेदेन रक्तत्वनिर्णयविरोधी रक्त-
त्वसंशयस्तत्र नोत्पद्यते इति बोध्यम् । यत्तु तादृशविशिष्टसंश-
येनोभयधर्मविशिष्टदण्डादिवैशिष्ट्यं भासते इति केवलरक्त-
त्वादिविशिष्टवैशिष्ट्यावगाहित्वमेव तस्येति । तदसत् ।
तथा सति रक्तपटवान्पुरुष इत्यादि निर्णयदशायामप्यनुभूय-
मानस्य दण्डधर्मिकरक्तत्वसंशयाहित पुरुषधर्मिकरक्तत्ववि-
शिष्टदण्डसंशयस्यापलापापत्तेः यद्रक्तत्वावच्छिन्नप्रतियोगिकाभा-
वकोटिकसंशये रक्तपटवानित्यादिनिर्णयस्यापि विरोधित्वा-
त् । केचित्तु तद्धर्मविशिष्टप्रतियोगिविशेषिताभाव लौकिकप्र-
त्यक्षे तद्विशिष्टवैशिष्ट्यावगाहित्वनियमः प्रतियोगिवि-

शेषिताभावज्ञानंतु विशिष्टवैशिष्ट्यबोधमर्यादां नातिशेत इति
दीधिति ग्रन्थोपि लौकिकप्रत्यक्षपरएव एवं च विशेषणसंदे-
हाहितविशिष्टसन्देहे विशिष्टाभाव उपनीतएवभासतेन तु
तदंशे तस्य लौकिकत्वमुपेयते तत्संशयानन्तरंसाक्षात्कारि-
त्वरूपेणतद्विशेषिताभावावगाहिनोनुव्यवसायस्य केनाप्यन-
भ्युपगमात् यतस्तत्रकेवलं विशेष्येविशेषणमिति रीत्यैवर-
क्तत्वादिविशिष्टप्रतियोग्यभावोभासते इति वदन्तितदपि न
श्रद्धेय,न्ताद्दशसंशयेरक्तत्वादेः प्रतियोग्यंशेउपलक्षणतया भा-
नोपगमे तस्य ;शुद्धदण्डत्वावच्छिन्नप्रतियोगिताकत्वेनाभावाव-
गाहितया शुद्धदंडत्वादिनादंडादिमत्तानिर्णय प्रतिबध्यतापत्तेः
रक्तत्वादिवत्दंडत्वादेरप्युपलक्षणतयाभानोपगमेरक्तदंडवान्पु-
रुषइत्यादिनिर्णयस्यापितदप्रतिबन्धकतापत्तिः रक्तत्वदंडत्वाद्यु
पलक्षितरक्तदंडादिप्रतियोगिकत्वस्य रक्तदंडाद्युभयाभावादिसा
धारणतयाताद्दशप्रतियोगित्वावगाहिनोभाववत्ताज्ञानस्य रक्त-
दंडत्वादिविशिष्टप्रतियोगिमत्तानिर्णयाप्रतिबध्यत्वात् एवं प्रति
योगिकोटौउपलक्षणविधयायदिकश्चिदभावोपनीतभानेभासते
तदाधूमादिहेत्वंशे उपलक्षणतयापक्षधर्मत्वावगाहिनः पक्ष-
धर्मधूमसमानाधिकरणाभाव प्रतियोगिता नवच्छेदकं सा
ध्यतावच्छेदक मित्याकारकस्य धूमसमानाधिकरणाभावप्र
तियोगितावच्छेदकत्व सामान्याभावावगाहिव्यापकता पराम-
र्शस्यानुमिति हेतुतासम्भवात् यत्र पर्वतवृत्तिधूमसमानाधि-
करणाभावप्रति योगितावच्छेदकत्वत्वावच्छिन्नाभावः साध्यता
वच्छेदकेनगृहीतः अपि तुधूमसमानाधिकरणाभावप्रतियोगि-
ताकावच्छेदकत्वरूपशुद्धधूमव्यापकतावच्छेदकत्वमेव तत्रानुमि-
त्यनुपपत्ति रूपदूषणेनदीधितिकृता व्यापकता परामर्शे हे



तुतावादिमतखंडनस्यासंगत्या पक्षे त्वस्मदुक्तसमाधानमेवस
म्यक् । अथविशिष्टवैशिष्ट्यबोधं प्रतिविशेषणतावच्छेदकप्रकारक
निर्णयत्वेन हेतुतयादंडोरक्तोनवेतिसंशयानन्तरं रक्तदंडसन्दे-
ह्मीत्याकारकविशिष्टवैशिष्ट्यावगाहिनः संशयानुव्यवसायानु-
पपत्तिः, न च तत्रविशेष्ये विशेषणमिति रीत्यैवरक्तदंडत्वादि-
विशिष्टदंडादिज्ञानांशे विषयितासंबन्धेन भासत इति वा-
च्यम् । तथासतिनिर्विकल्पकोपस्थितरक्तत्वादिना विशेषि-
तं दंडादिकं विषयीकृत्यरक्तदंडञ्जानामीत्याकारकस्य ज्ञा-
नानुव्यवसायस्योत्पाद प्रसङ्गादित्याशङ्काप्युक्तरीत्यैव निरस-
नीया अत्रापि तुल्यकक्षताद्दशविशेषणद्वयविशिष्टवैशिष्ट्या
वगाहित्वस्यैवज्ञानांशे स्वीकारात् । केचित्तु । तादात्म्यसंबंधेन
दण्डत्वाद्यवच्छिन्नविशेष्यकरक्तत्वप्रकारकज्ञानस्य रक्तत्वादिवि-
शेषितदंडादिप्रकारतानिरूपित विशेष्यतासंबंधेनानुव्यवसायं
प्रतिहेतुत्वकल्पनमावश्यकं अन्यथायत्र दंडोरक्तइत्याकारकप्रत्य
क्षात्मकंविशेषणतावच्छेदकप्रकारकज्ञानंतदनंतरं चदंडांशेरक्त
त्वाप्रकारकंदंडइत्याकारकं स्मरणंतदनन्तरं चरक्तदंडंस्मरामी-
त्याकारकस्मरणानुव्यवसायस्य प्रसङ्गात्एवंचकेवलं विशेष्येविशे
षणमितिरीत्यारक्तत्वादिविशेषितदंडादिविशेषणकज्ञानभानो
पगमेपि रक्तत्वादिनिर्विकल्पकस्थलेदर्शितातिप्रसंगाभावइत्या-
हुः। परेतुदंडादिधर्मिकरक्तत्वादिप्रकारकज्ञानस्यरक्तत्वादिविशे
षितदंडादिविषयकत्वेननानुव्यवसायः। धर्मिणोविशेषणवत्ता
याअनुव्यवसायेनग्रहणेप्रामाण्यस्य स्वतोग्राह्यताऽपत्तेरितिरक्त
त्वेनदंडंसंदेह्मीत्याकारकज्ञानां शेप्रकारतासंबंधेनरक्तत्वप्र-
कारकएवतादृशोनुव्यवसायइतिप्राहुः। अथरक्तदंडवानित्यादि
विशिष्टवैशिष्ट्यबोधेदंडत्वाद्यवच्छिन्न धर्मिकरक्तत्वादिप्रकारक

ज्ञानत्वेनैव हेतुतास्तु किं गुरुशरीरनिर्णयत्वनिवेशे नदंडोर
क्तोनवेतिसंशयानंतरंरक्तत्व विशिष्टदंडवैशिष्ट्यावगाहिज्ञाना
नुत्पादस्यविवादग्रस्तत्वात् इतिचेन्नसंशयसाधारणज्ञानस्य वि
शिष्टवैशिष्ट्यबोधहेतुत्ववादिनाऽप्रामाण्यशंकास्कं दितज्ञा-
नादपिविशिष्टवैशिष्ट्यबोधोत्पादः स्वीकरणीयः। अप्रामाण्य
शंकास्कंदितज्ञानस्य संशयसम शीलतयानिर्णयकार्यंप्रत्येव
समर्थत्वात् अतोऽप्रामाण्यनिर्णयत्वावच्छिन्नाभावविशिष्टवि-
शेषणतावच्छेदकप्रकारकज्ञानत्वेनहेतुतोपगंत व्येतिविशेषण
तावच्छेदकप्रकारकज्ञानापि चयागुरुशरीरस्यतदीयाप्रामाण्य-
निर्णयस्यनिवेशनीयतयागौरवंनिर्णयमात्रस्यहेतु तावादिनां
तु अप्रामाण्यशंकास्कंदितज्ञानादपिनिर्णयफलानुदयात्तन्मते
अप्रामाण्यज्ञानत्वावच्छिन्नाभावस्यैव जनकत्वावच्छेदकत्वेलाघ
वं,नचतन्मतेऽप्रामाण्यनिश्चयत्वावच्छिन्ना भावस्यैवाखंडस्य
तत्तद्व्यक्तित्वेनैवजनकतावच्छेदकत्वमुपगंतव्यमिति नाप्रामाण्य
ज्ञानीयनिश्चयत्वनिवेशइतिवाच्यं। अभावस्यतत्तद्व्यक्तित्वेनज-
नकतावच्छेदकतायाः सिद्धान्तविरुद्धत्वात् तथासतिअप्रामाण्य-
निश्चयघटाद्यन्यतरत्वावच्छिन्नप्रतियोगिता कानामखंडाभाव
व्यक्तीनामपितत्तद्व्यक्तित्वेन निवेशेविनिगमनाविरहप्रसङ्गात्ए
वंविशिष्टवैशिष्ट्यबोधं प्रतिनिर्णयत्वेनहेतुत्वेरक्तदंडवानित्या-
दिविशिष्टवैशिष्ट्यावगाहिप्रत्यक्षं प्रतितादृशप्रत्यक्षेच्छाविरहवि-
शिष्टायारक्तत्वाभावादिसाध्यक दंडादिपक्षकानुमितिसामग्र्या
स्तथाविधानुमित्यादिकंप्रतितथाविधानु मितीच्छाविरहवि-
शिष्टतथाविधविशिष्टवैशिष्ट्या वगाहिप्रत्यक्षेच्छाविशिष्टप्रत्यक्ष
सामग्र्याः प्रतिबन्धकत्वाकल्पनेनलाघवन्तथाविधविशिष्टवैशि-
ष्ट्यबोधजनकनिर्णयस्य विपरीतनिर्णयविषयातादृशानमित्या-



दिप्रतिबन्धकतयातादृशसामग्र्याः संवलनस्यैवासम्भवात्संशय
साधारणज्ञानस्यहेतुतामते च संशयघटितविशिष्टवैशिष्ट्यबो-
धजनकसामग्र्यासहतादृशानुमित्यादि सामग्र्याः संवलनंसम्भ-
वतीतितादृशप्रतिबन्धकताकल्पनमावश्यकमेवेतिगौरवम्। अत्र
केचित्। रक्तारक्तदंडवान्पुरुषइत्याकारकविशेषणधर्मिकसं-
शयोऽनुभवविरुद्धः सर्वत्रसंशयेधर्मिणोमुख्यविशेष्यतयैवानु-
भवात् एवंचसंशयविरोधितयाविशिष्टस्यवैशिष्ट्यमिति रीत्या
तादृशसंशयापत्त्यसम्भवेपिरक्तत्व तदभावादीनांस्वतंत्रोपस्थि-
तिदशायांविशेष्येविशेषणमिति रीत्यातादृशसंशयापत्तिर-
स्त्येवेतिविशेष्येविशेषणमिति रीत्यारक्तत्वविशिष्टदंडादिप्र-
कारकबोधेदंडादिधर्मिकरक्तत्वादिसं शयस्यप्रतिबन्धकत्वं
स्वीकरणीयंतदभावस्यकार्यसहभावेन हेतुत्वात्पूर्वक्षणेतत्सत्त्वे
पिकार्यकालेऽसत्वान्नतथाविधसंशयापत्तिः इत्थंचतादृशप्रति
बध्यतावच्छेदकरक्तत्वादिप्रकारतानिरूपित दंडत्वाद्यवच्छिन्नवि-
शेष्यतापन्ननिष्ठप्रकारता शालित्वस्यरक्तदंडवानित्यादिविशि-
ष्टवैशिष्ट्यबोधसाधारणतयासंशयानन्तरं तथाविधविशिष्टवै-
शिष्ट्यबोधापत्त्यसम्भवात् तज्जनकतावच्छेदकेनिर्णयत्वस्यानिवे-
शेपिनक्षतिः अथयत्रदंडोरक्तोनवाइतिसंशयानन्तरद्वितीयक्षणे
दंडोरक्तइत्याकारकस्मरणात्मकनिश्चयस्तद् द्वितीयक्षणेरक्तदंड
वानितिज्ञानोपपत्तये विशिष्टवैशिष्ट्यानवगाहित्वमवश्यन्निवेश
नीयंतादृशप्रतिबध्यतावच्छेदककोटौइतिकथंतादृशसंशयप्रतिब-
ध्यतावच्छेदकस्यविशिष्टवैशिष्ट्यबोधसाधारण्यं,नचविशिष्टवैशि-
ष्ट्यानवगाहित्वस्यसंशयाभावजन्यतावच्छेदकत्वे विशिष्टवैशिष्ट्य
बोधोत्पत्तिदशायांसंशयाभाव रूपकारणवशाद्विशिष्टवैशिष्ट्या
नवगाहिज्ञानत्वावच्छिन्नापत्तिरिति संशयप्रतिबन्धकतायांनि

शयमुत्तेजकीभूत्यैवदर्शितस्थलेरक्त दंडवानितिज्ञानोत्पादइति
वाच्यं संशयप्रतिबन्धकतायांनिर्णय स्योत्तेजकत्वं निश्चयाभाव
विशिष्टसंशयस्यैवप्रतिबन्धकत्वं विनिगमकविरहेण प्रतिबन्धक-
ताबाहुल्यस्यावच्छेदकगौरवस्यचप्रसङ्गात् संशयप्रतिबध्यतावच्छेद
केविशिष्टवैशिष्ट्यानवगाहित्वनिवेशनस्यतदवच्छिन्नं प्रतिनिर्णय
त्वेनप्रतिबन्धकत्वस्यचस्वीकारात् वस्तुतोविशिष्टवैशिष्ट्यानव
गाहित्वं नसंशयप्रतिबध्यतावच्छेदकमुच्यते किंतुरक्तत्वविशिष्ट
प्रतियोगिकत्वानवच्छिन्नसंसर्गतानिरूपकीभूताया रक्तत्वप्र
कारतानिरूपितदंडत्वाद्यवच्छिन्नविशेष्यतायानप्रकारतातच्छा-
लित्वमेवसंशयानन्तरोत्पन्ननिश्चयद्वितीयक्षणोत्पन्नरक्तदंडवानि
तिबोधेचनतथाविधदंडप्रकारतेतिनतदनुपपत्तिः।संशयशून्यका
लीनविशिष्टवैशिष्ट्यबोधे चरक्तत्वादिविशिष्टप्रतियोगिकत्वाव-
च्छिन्नातदनवच्छिन्नाचसंयोगनिष्ठसंसर्गता स्वीक्रियतेद्विविध-
सांसर्गिकविषयतायाविरुद्धत्वे मानाभावात् विशिष्टवैशिष्ट्य
बोधेविशेषणीयप्रकारताया विशेषणान्तरविशिष्टं तत्तद्विशेष
णपर्याप्ततयाविशेषणान्तरावच्छिन्नतया वावैलक्षण्यमतेरक्तत्वा
दिनिरूपितविशेष्यतयाऽवच्छिन्नातद्भि न्नावारक्तत्वाद्युक्तिनीर
क्तत्वानवच्छिन्नावायाप्रकारतासासंशय प्रतिबध्यतावच्छेदकेनिवे
शनीयानतुतत्तद्विशेषणसंसर्गता विशेषनिरूपकत्वमपि संश
यानुत्तरबोधेचद्विविधप्रकारतास्वीक्रियतेअविरोधात् तथाच
निरुक्तसंशया भावजन्यतावच्छेदकावच्छिन्नोत्पत्तिस्तत्रइष्टैवे
तिनदोष इति चेन्न संशयानन्तरनिश्चयोत्पत्तिस्थलेतद् द्वितीयक्ष
णेसंशयविनाशेतृतीयक्षणएवरक्तदंडवानितिबोधः स्वीक्रियते
क्षणैकापलापेचक्षति विरहात् तथाचविशिष्टवैशिष्ट्यबोधत्व
व्यापकस्यरक्तत्वप्रकारतानिरूपित दंडत्वाद्यवच्छिन्नप्रकारता



शालिज्ञानत्वस्यैवसंशयप्रतिबध्यतावच्छेदकत्वसम्भवात्संशयप्रति
बन्धकतायांचाप्रमाण्यज्ञानाभावोननिवेशनीयःअप्रमाण्यसंशयास्क
न्दितसंशयस्थलेपितादृश संशयनाशानन्तरमेवरक्तदंडवानिति
बोधोपगमात् अतोऽप्रामाण्यग्रहदशायांनरक्तारक्तदंडवानित्या-
कारकज्ञानापत्तिः नवारक्तत्वाभावांशेअप्रामाण्यग्रहास्कन्दित
संशयाद्रक्तदंडवानित्यादिविशिष्टवैशिष्ट्यबोधानुपपत्तिः। यत्तु
संशयस्यविशेष्येविशेषणमितिरीत्याबोधेरक्तत्वप्रकारक दंडत्वा-
द्यवच्छिन्नविशेष्यकज्ञानत्वेनैव प्रतिबन्धकतानतुरक्तत्वतदभावो-
भयप्रकारकदंडत्वावच्छिन्नविशेष्यकज्ञानत्वरूपसंशयत्वेन दण्ड-
त्वावच्छिन्नविशेष्यंकरक्तत्वाभावप्रकारकज्ञानत्वेनवागौरवात्त
थाचविशिष्टवैशिष्ट्यबोधव्याहतधर्मोऽवश्यं वाच्यः प्रतिबध्यताव-
च्छेदकोन्यथाविशिष्टवैशिष्ट्यबोधविलयप्रसङ्गात्इतितदसत्रक्त-
त्वप्रकारकत्वेनप्रतिबन्धकत्वेरक्तदंडवा नित्येतादृशज्ञानोत्पत्ति-
कालेतदवच्छिन्नाभावासत्वेनतदभावस्यकार्यसहभावेन हेतुत्वा-
सम्भवात्रक्तारक्तदंडवानित्येतादृशज्ञानस्यदुर्वारत्वात्अथरक्ता
रक्तदंडवानित्येतादृशज्ञानानुत्पादस्य विवादग्रस्ततयासंशयप्र-
तिबन्धकत्वमेवासिद्धमितिचेन्नदंडोरक्तोनवेति संशयस्यरक्तदंड
वानित्येतादृशज्ञानप्रतिबन्धकत्वेदंडपक्षकरक्तत्वाभावहेतुकानु
मितिरक्तत्वाभावविशिष्टदंडपक्षकानु मित्यादिसामग्र्यारक्त-
दंडवानित्यादिलौकिकप्रत्यक्ष प्रतिबन्धकत्वा कल्पनात् ला
घवादेवतत्सिद्धेः संशयस्यरक्तत्वावच्छिन्नधर्मिकरक्तत्वाभावप्रका
रकज्ञानत्वेनैवप्रतिबन्धकत्वोपगमात् तादृशसामग्रीकालेत
थाविधज्ञानत्वावच्छिन्नसत्तायाआवश्यकत्वात् तत्प्रतिबंधक
ताकल्पनेतादृशसामग्रीप्रतिबन्धक तायाअफलत्वात् यत्र च
भिन्नेन्द्रियादिजन्यंदंडोनरक्तइत्याकारक निर्णयात्मकज्ञानंतत्र

तत्रांशएव रक्तत्वांशे लौकिकमपि रक्तः दंडवानिति ज्ञानं स्वीक्रियतेऽतो नोक्तरूपेण प्रतिबन्धकतानुपपत्तिरिति वदन्ति, अत्रोच्यते । रक्तदण्डवानित्येतादृशज्ञानं प्रति उक्तसंशयस्य प्रतिबन्धकत्वे भिन्नविषयकानुमित्यादिकं प्रति तादृशप्रत्यक्षेच्छाविशिष्टप्रत्यक्षसामग्रीप्रतिबन्धकतायां तथाविधसंशयाभावनिवेशाधिक्यात् गौरवं तादृशसंशयस्य दर्शितबाधसाधारणरूपेणाभावनिवेशे दंडानरक्त इत्येतादृशबाधाभावस्य तत्रानिवेशलाघवं इति तु न सम्भवदुक्तिकं इच्छाकाले बाधसत्त्वेपि आहार्यप्रत्यक्षोत्पत्त्या इच्छाविशिष्टप्रत्यक्षसामग्रीप्रतिबन्धकतायां बाधाभावस्य समाप्य निवेशनीयत्वात् यदि च बाधबुद्धाविव संशयेपि इच्छाया उत्तेजकत्वं स्वीक्रियते तदेच्छाकालीन संशयाद्विशिष्टवैशिष्ट्यबोधापत्तिरिति तन्निर्णयत्वेन हेतुत्वमावश्यकमेव एवमितरांशे विशेषणतापन्नस्यापि संशयधर्मितयाभानं भवत्येवान्यथा पक्षे साध्यसंदेहदशायामनुमित्युपपादनाय संशयसाधारणव्यभिचारज्ञानप्रतिबन्धकतायां प्राचां साध्याभावांशे निश्चयत्वनिवेशनस्यासंगत्यापत्तेः व्यभिचारज्ञानस्याधेयत्वांशे विशेषणतापन्नेऽधिकरणे साध्याभावसंशयायोगादिति रक्तारक्तदंडवानिति बोधवारणाय संशयप्रतिबन्धकत्वमयुक्तमेव यदि च रक्तारक्तदंडवानित्यादिबोधवारणाय मा भूत्संशयः प्रतिबन्धकः तदाप्युक्तसामग्रीप्रतिबन्धकत्वाकल्पनप्रयुक्तलाघवानुरोधेन संशयस्य प्रतिबन्धकत्वं कल्प्यमेव यच्चोक्तं संशयप्रतिबन्धकतामते इच्छाविशिष्टरक्तदंडवानित्यादिप्रत्यक्षसामग्रीप्रतिबन्धकतायां संशयाभावनिवेशाधिक्यात् गौरवमिति तदप्यकिंचित्करं सिद्ध्यभावबाधाभाव तदभावव्याप्यवत्ताज्ञानाभावादिरूपबहुतरकारणघटितोक्तानुमितिसामग्र्या रक्तदंडवानि-



त्यादितादृशप्रत्यक्षप्रतिबंधकत्वाधिक्यापेक्षया इच्छाविशिष्टतादृशप्रत्यक्षसामग्र्यां संशयाभावनिवेशस्यैवोचितत्वादिति विभाव्यते तदापि व्याप्त्यादिरूपातीन्द्रियधर्मविशिष्टविशेषणकबोधे तादृशसंशयस्य प्रतिबंधकत्वं निर्युक्तिकमेव विशेषणधर्मिकतादृशधर्माभावप्रकारकज्ञाननियतानुमितिसामग्रीकाले तादृशधर्मविशिष्टवैशिष्ट्यावगाहिज्ञानप्रतिबंधकबाधसत्ताया आवश्यकत्वात् । तत एव तथाविधप्रत्यक्षवारणसंभवात् केनापि तादृशसामग्रीप्रतिबंधकताकल्पनात् अतीन्द्रियधर्मप्रकारकं लौकिकप्रत्यक्षं न संभवत्येव येन भिन्नेन्द्रियादिजन्यतदभावप्रकारकज्ञानघटितोक्तसामग्रीकाले तदापत्तिः स्यादिति तादृशस्थलीयविशिष्टवैशिष्ट्यबोधे निश्चयत्वेन हेतुत्वमावश्यकमेव तावतैवानुमितिलक्षणस्य विशिष्टवैशिष्ट्यबोधातिव्याप्तिशङ्का दीधितिकृतः संगच्छते न च व्याप्त्यादिविशिष्टधूमादिविशेषणकबोधे धूमादिधर्मिकव्याप्त्यादिसंशयस्य तद्धर्मिकतदभावप्रकारकज्ञानत्वेन प्रतिबन्धकत्वे व्याप्त्यभावप्रकारकधूमादिविशेष्यकशाब्दबोधसामग्र्यास्तादृश प्रत्यक्षप्रतिबंधकत्वाकल्पनेन लाघवं तादृशशाब्दसामग्रीकाले तादृशाभाव प्रकारकतद्विशेष्यकज्ञानस्य योग्यताज्ञानस्यावश्यकत्वात् भवतां तु तादृशसामग्रीप्रतिबंधकत्वकल्पनमावश्यकं अन्यथा संशयात्मकयोग्यताज्ञानघटिततादृशशाब्दसामग्रीकाले तथा विधप्रत्यक्षस्य दुर्वारत्वादिति वाच्यम् । शाब्दबोधं प्रति योग्यताज्ञानहेतुताया निर्युक्तिकत्वात् तादृशशाब्दसामग्रीप्रतिबंधकताया मतद्वय एवावश्यकत्वात् योग्यताज्ञानहेतुतामते तु रक्तत्वादिविशेषितदण्डादिविशेषणकबोधे रक्तत्वादिसंशयस्य न प्रतिबंधकत्वं खलेकपोतन्यायेन तादृशशाब्दबोधे दण्डो रक्तो न वेति यो-

ग्यतासंशयस्य हेतुत्वात्प्रत्यक्षत्वस्यप्रतिबध्यतावच्छेदकत्वे कार्यसहभावेनतत्प्रतिबंधकत्वसम्भवः। रक्तत्वांशे संशयाकारतद्विशेषितदण्डादिसंशयस्य योग्यताज्ञानविधयातादृशशाब्दबोधहेतुतायाआवश्यकत्वात् दण्डेरक्तत्वनिर्णयस्य प्रागसत्वेपि तादृशशाब्दबोधस्यसर्वानुभवसिद्धत्वात् नचदण्डीरक्तोनवापुरुषोदण्डीनवेतिसंशयस्य समूहालम्बनैकसंशयत्वात्तादृशशाब्दबोधोभविष्यतीति वाच्यम्। रक्तदण्डाभाववानित्यादिनिश्चयकालेतथाविधसंशयस्य रक्तोदण्डःपुरुषोदण्डीतिनिर्णयस्य च संभवेतदानीं तादृशशाब्दबोधप्रसङ्गवारणाय तत्र पुरुषविशेषणतापन्नदण्डांशे रक्तत्वादिप्रकारकस्य समूहालम्बनविलक्षणयोग्यताज्ञानस्य हेतुताया आवश्यकत्वात्। वस्तुतस्तु। दण्डत्वधूमत्वाद्यवच्छिन्न धर्मिकरक्तत्वाभावव्याप्यभावादिप्रकारकज्ञाननियतानुमिति शाब्दबोधसामग्रीकाले रक्तत्वव्याप्यादिविशिष्टद्रव्यत्वावच्छिन्नविशेषणकप्रत्यक्षवारणाय तत्र तादृशसामग्रीणां प्रतिबन्धकतायाः सर्वैरेवकल्पनीयतया तत्रैवप्रतिबध्यतावच्छेदकेरक्तत्वव्याप्यादि धर्मितावच्छेदकधर्माननिवेश्य सामान्यतः प्रतिबध्यप्रतिबन्धकभावकल्पनेनोपपत्तेः रक्तदण्डवान्वह्निव्याप्यधूमवानित्यादिप्रत्यक्षे तादृशसामग्रीप्रतिबन्धकताधिक्य मस्माकमपि। न च रक्तत्वविशिष्टद्रव्यत्वावच्छिन्नप्रकारताकप्रत्यक्षंजायतामित्येतादृशेच्छाकालेऽसत्यांतादृशप्रत्यक्षसामग्र्यामुक्तसामग्रीकाले रक्तदण्डवानित्यादिप्रत्यक्षवारणायइच्छाविशेषान् विशिष्योत्तेजकीकृत्यद्रव्यत्वदंडत्वादिरूपधर्मितावच्छेदकभेदेन भिन्नानन्तप्रतिबंधकताकल्पनमावश्यकमिति वाच्यम्। उक्तसामग्रीविशिष्टस्य स्वीयप्रत्यक्षनिष्ठविशेष्यतानिरूपिताया रक्तत्वप्रकारतानिरूपितप्रकारतातन्निरूपितावच्छिन्नत्व निष्ठावच्छेदकतावच्छेदकत्व रूपद्रव्यत्वादिनिष्ठसंबंधावच्छिन्नप्रतियोगिताकेच्छाभावस्य रक्तत्वतावच्छेदकधर्मनिष्ठप्रत्यासत्त्यारक्तत्वविशिष्टप्रकारक बोधम्प्रति तादृशधर्मान् विशिष्यानिवेश्यैव प्रतिबंधकताकल्पनात्। यत्तुमाभूद्विशेष्येविशेषणमिति रीत्याबोधम्प्रतिसंशयः प्रतिबंधकः तथापि रक्तदंडवानित्यादि बोधम्प्रतिदंडत्वावच्छिन्न विशेष्यतानि रूपितरक्तत्वाद्यभावप्रकारता शालिज्ञानत्वेन दंडोरक्तोनवेतिसंशयस्य प्रतिबंधकता कल्प्यते तादृशरक्तत्वाभावप्रकारताशून्यतथाविधरक्तत्वप्रकारताशालिज्ञानत्वरूपनिर्णयत्वेन हेतुत्वेतादृशप्रकारताशून्यत्वतादृशप्रकारताशालित्व ज्ञानत्वानांत्रयाणां विशेषणविशेष्यभावे विनिगमनाविरहेण षट्कारणताकल्पनापत्तेःअस्मन्मतेरक्तत्वाभावप्रकारताशालित्वज्ञानत्वयोर्विशेष्यविशेषणभावेविनिगमनाविरहेणसंशयाभावस्यकारणताद्वयंरक्तत्वप्रकारताशालित्वज्ञानत्वयोस्तथात्वेविनिगमनाविरहाद्दण्डोरक्तइत्येतादृशज्ञानस्यकारणताद्वयमिति चतुष्टयमात्रकल्पनात्। अथरक्तत्वाभावप्रकारकज्ञानस्यात्मनिष्ठप्रत्यासत्त्याप्रतिबंधकत्वे कायव्यूहस्थले एकस्मिन्नेवात्मनिशरीरान्तरावच्छेदेनदण्डोरक्तोनवेति संशयसत्वेशरीरान्तरावच्छेदेनरक्तदंडवानिति बोधोत्पत्त्या व्यभिचारइतितत्तच्छरीरनिष्ठप्रत्यासत्त्यातथात्वेवपुरपुरप्रवेशस्थलेतच्छरीरावच्छेदेना भिभाव्यसंशयसंबंधेपि तदवच्छेदेनाभि शांवकस्यात्मनि विशिष्टवैशिष्ट्यबोधोत्पत्त्याव्यभिचार इति तच्छरीरावच्छिन्नत्वं निवेश्यात्मनिष्ठप्रत्यासत्त्यातस्य प्रतिबंधकतावाच्येतिअनंतशरीरभेदेन प्रतिबंधकताभेदागौरवम्। अस्मन्मते समवायावच्छेदकत्वघटितसामानाधिकरण्योभयसंबंधेन रक्तत्वप्रकारकज्ञानहेतुतातादृशाभावप्रका-

रताशून्यत्वनिवेशादिनिगमनाविरहेण तस्य कतिपयकारण तावच्छेदकलाघवस्यानपायात् विशेषणतावच्छेदक प्रकारकज्ञान हेतुतायां शरीरविशेषावच्छिन्नत्वानिवेशे यत्र कायव्यूह वत्यात्मनि एकशरीरावच्छेदेन तादृशज्ञानसत्वे तदीयान्यशरी रावच्छेदेनाभिभावकान्तरे तादृशज्ञानसत्वे च तादृशशरी रावच्छेदेन तदात्मनि विशिष्ट वैशिष्ट्यबोधापत्तेः प्रागुक्तदि शावारणासम्भवेन तत्र तदनिवेशादिति चेन्न । अस्तु संशय प्रतिबंधकतायां शरीरविशेषावच्छिन्नत्वनिवेशात्तद्भेदेनभेदः । तथाप्येतन्मतापेक्षया संशयभेदस्य कारणतावच्छेदकत्वमते र- क्तदंडवान्रक्तदण्डवत्पुरुषवान्रक्तदण्डिमद्भूतलं इत्याद्यनंत विधविशिष्टवैशिष्ट्यबोधहेतुतावच्छेदक कोटौरक्तत्वाद्यभावप्रका- रकैकविधसंशयभेदस्य निवेशनीयतयाभवन्मतिगौरवंरक्तदंडव- त्पुरुषवानित्यादिबोधजनकतायान्तदनिवेशेरक्तत्वांशेसंशयात्म- कदंडाद्यंशे निर्णयात्मक रक्तत्वविशिष्ट दंडादिप्रकारकज्ञा- नात्तथा विधविशिष्टवैशिष्ट्यबोधापत्तेः । विशेषणतावच्छेद- कतावच्छेदकाद्यंशेपि निर्णयात्मकादेवावच्छिन्न विशेषणतावच्छे- दकताकविशिष्ट वैशिष्ट्यबोधोत्पत्त्या तत्रेष्टापत्ते रयोगात् अत एवानुमिति जनकताया मिववह्निव्याप्य धूमवत्पर्व- तवानित्यादिवि शिष्टवैशिष्ट्यबोधजनकतायामपि व्याप्त्यं- शे निश्चयत्वनिवेशात्तत्रानुमिति लक्षणातिव्याप्तिराशङ्किता- दीधिति कारैणरक्तत्वप्रकारकनिर्णय जन्यतावच्छेदकीभूतरक्त दंडवानित्यं तादृशबोधनिष्ठरक्तत्व विशिष्टवैशिष्ट्यावगाहि त्वस्य रक्तदंडवत्पुरुषवानित्यादिबोधत्वव्यापकत्वेपि यत्र रक्तत्वांशे संशयात्मकरक्तारक्त दंडवान् पुरुषइत्यादिज्ञा नोत्तरंरक्तोदंडइतिस्मरणात्मकनिश्चयस्तदुत्तरं तथाविधबोधा



पत्तेः । अस्मन्मतेतुतथाविधसकलबोधसाधारणरक्तत्वविशिष्ट- दण्डवैशिष्ट्यावगाहिज्ञानत्वावच्छिन्नं प्रतितथाविधसंशयस्यैक प्रतिबध्यप्रतिबन्धकभावे नैवोपपत्तिरिति रक्तदण्डवत्पुरुषवा नित्यादिबोधेरक्तत्वविशिष्टदण्ड वैशिष्ट्यावगाहिज्ञानत्वेनैवहे तुता । रक्तत्वांशेसंशयात्मकज्ञानस्यनरक्तत्वविशिष्टदण्डादिवै- शिष्ट्यावगाहित्वमिति नतदंशेनिश्चयत्वनिवेशनंकस्यापीति तु नसत् संशयस्याप्रतिबंधकतामतेदण्डोरक्तइति निर्णयानन्तरंद् ण्डावलाद् डेरक्तत्वाभावावगाहिनोरक्तत्वांशेसंशयात्मकदण्डज्ञा- नस्यरक्तत्वविशिष्टदंडादिवैशिष्ट्यावगाहित्वेबाधकाभावात् वस्त तस्तुकायव्यूहस्थलेएकस्मिन्नात्मनिएकशरीरावच्छेदेन संशयसत्वे शरीरांतरावच्छेदेनबोधोत्पत्तावपिप्रमाणाभावात्शरीरविशेषा वच्छिन्नत्वमनंतर्भाव्यैवात्मनिष्ठप्रत्यसत्त्यासंशयप्रतिबन्धकत्वंक ल्पनीयमितिनसंशयस्यप्रतिबन्धकतामते उक्तगौरवावकाशइति तदपिनयुक्तं । विशिष्टवैशिष्ट्यबोधंप्रतिसंशयस्यप्रतिबन्धकत्वे भिन्नविषयकानुमित्यादिकं प्रतिविशिष्टवैशिष्ट्यबोधात्मकप्रत्य क्षेच्छाविशिष्टतादृशप्रत्यक्षसामग्र्याः प्रतिबन्धकतायाविशेषण तावच्छेदकाभावप्रकारकज्ञानाभावस्य निवेशनीयतापत्त्यातस्य कारणांतरेणेच्छयाचसमं विशेष्यविशेषणभावेविनिगमनाविरहे णप्रतिबन्धकताबाहुल्यप्रसङ्गात् निश्चयत्वेनहेतुतामतेतत्प्रकार कज्ञानेविशेषणतयानिविष्टस्य तदभावा प्रकारकत्वस्यान्यत्रवि शेषणतयानिवेशासम्भवात् संशयप्रतिबन्धकतामतेनिर्णयत्वा वच्छिन्नस्यसामग्रीप्रतिबन्धकतायांनिवेशेसंशयानं तरनिश्चयद्वि- तीयक्षणेतन्मतसिद्धानुमित्यादेरनुपपत्तिः । नचसंशयनिर्णयेच्छानांयुगपदवस्थानासम्भवेन संशयदशायामिच्छाविशिष्ट वि- शेषणतावच्छेदकप्रकारकनिर्णय समवधानमेव नसम्भवति इ-

तिनियमनुपपत्तिः । अपिच्छाबुद्धेः क्षणत्रयावस्थायित्वमतेऽपि
ज्ञाबुद्धिद्वितीयक्षणोत्पन्नसमानाधिकरण विशेषगुणानुत्पत्तेः ।
संशयस्यापीच्छाबुद्ध्यात्मकत्वेऽपि क्षणयोर्युगपदवस्थानस्य दुरु-
पपादत्वमितिवाच्यं, ज्ञानेच्छयोर्युग पदनुत्पादस्यनवीनैरनुप-
गमात् निर्णयेच्छयोर्युगपदुत्पादस्थले एवतादृशानुपपत्तिस-
त्त्वात्एवंसंशयप्रतिबन्धकतामतेदण्डत्वसामानाधिकरण्ये न-
रक्तत्वावगाहिनिविशिष्ट वैशिष्ट्यबोधे दण्डत्वसामानाधिक-
रण्येन रक्तत्वाभावावगाहिज्ञानत्वेन प्रतिबंधकत्वेसामाधि
करण्यमात्रेण कोटिद्वयावगाहिनिर्णयात्तादृश विशिष्ट
वैशिष्ट्यबोधानुपपत्तिः दंडत्वावच्छेदेनतदवगाहिज्ञानत्वेनप्र
तिबधकत्वे दण्डत्व सामानाधिकरण्ये नरक्तत्वाभावंतदवच्छेदेन
रक्तत्वमवगाहमानात्संशयादपि तथा विधविशिष्टवैशिष्ट्य
बोधापत्तेः । रक्तत्वांशे दंडत्वसामानाधिकरण्यमात्रावगाहि
निविशिष्टवैशिष्ट्यबोधे तादृशज्ञानत्वेन हेतुत्वेफलीभूतज्ञाने
दण्डत्वावच्छेदेनरक्तत्वभान प्रतिबंधक समवहिताद्दंडत्वावच्छे
देनरक्तत्वनिर्णयात् रक्तत्वेदंडत्व सामानाकिरण्य मात्रावगा
हिविशिष्टवैशिष्ट्यबोधानुपपत्त्या तत्कल्पनेनतादृशापत्तिवार
णासम्भवात् अस्मन्मतेचस्वावच्छिन्नप्रतिबध्यतानिरूपितप्रतिबं
धकतावच्छेदकीभूतप्रकारताशून्यत्व विशिष्टस्वानिरूपकत्वसंबंधे
न रक्तत्वप्रकारतावज्ज्ञानत्वरूपनिर्णयत्वस्य दर्शितनिर्णयसा-
धारणस्यदर्शितसंशयव्यावृत्तस्य जनकतावच्छेदकत्वोपगमात्ना-
नुपपत्तिलेशोपीत्यपि वदन्ति । अत्रचानुद्बुद्धसंस्काराद्वि-
शिष्टवैशिष्ट्यावगाह्यनुभवकारणतावच्छेदक कोटौ ज्ञानत्वनि-
वेशनं तथा च सत्यन्तराविशेषण तावच्छेदकप्रकारकस-



रणमुपगम्यं वविशिष्टवैशिष्ट्यावगाहिसंस्कारात् स्मरणात्मकता
दृशबोधः स्वीकरणीयः विशिष्टविषयोपहितज्ञतिसाक्षात्कार-
पूर्वं च नियमतोविशिष्टविषयकस्य स्मरणंकल्पनीयं संस्कार-
व्यावृत्तसविषयकव्यक्तिवृत्तिजातिविशेषएव वाकारणतावच्छेद-
कतयाउपगन्तव्यः। तथाच कारणतावच्छेदकेपि ज्ञानत्वनि-
वेशनीयं विशिष्टप्रकारकज्ञतौ च विशेष्येविशेषणमिति रीत्या-
विषयत्वं स्वीकरणीयंईश्वरज्ञानेपितदेव विषयत्वं स्वीकरणीयं
न तु विशिष्टवैशिष्ट्यबोधीयविलक्षणविषयत्वमपीति ननित्य-
साधारण्यं जन्यतावच्छेदकस्य, ज्ञात्वांवाजन्यप्रत्यक्षवृत्तिजाति-
विशेष एव तथा यदिचयादृशादेवाप्रसिद्धसाध्यकपरामर्शाद्वि-
[illegible]ष्ट्यावगाह्यनुमितिः स्वतन्त्रविशेषणा वच्छेदकप्र-
कारकज्ञानदशायामुत्पद्यते । तादृशादपि परामर्शाद्विशेषण-
तावच्छेदकप्रकारकज्ञानासत्वे केवलंविशेष्येविशेषणमिति री-
त्यासाध्यविशेषणिकायासाध्य विशेष्यिकायावानुमितेरुत्प-
त्यातिप्रसङ्ग इति विभाव्यते तदानुमितित्वावच्छिन्नम्प्रत्यपि
तस्यहेतुत्वान्तरमास्थेयं शाब्दस्थलेचपदजन्यस्मरणशाब्दबोधा-
त्मकविशेषणतावच्छेदक प्रकारकज्ञानाच्छाब्दविशिष्टवैशि-
ष्ट्यावगाहिज्ञानानुत्पादेन तादृशबोधस्य पृथक् कारणताया
आवश्यकत्वात् ततएवोपपत्तिः । अस्तु वाकालिकविशेषणता-
दैशिकविशेषणतोभयसंबन्धेनप्रत्यक्षानुमित्यादिसाधारणं किं-
चिदविशेषितं विशिष्टवैशिष्ट्यावगाहित्वं जन्यतावच्छेदकमे-
वेति दिक् । अथ निर्विकल्पकानन्तरन्नविशिष्टवैशिष्ट्यबोधो-
पगमेचेति [illegible]रन्नाद्विशिष्टवैशिष्ट्यबोधे विशेषणतावच्छेदकप्र-
कारकज्ञानहेतुत्वं नियुक्तिकम् । कदाचित्तद्विशिष्टवैशिष्ट्यबो

धः कदाचिच्चतदुपलच्चितवैशिष्ट्यबोधः इत्यत्रासंसर्गाग्रहएव नियामकः तद्विशिष्टाभावाद्यग्रहदशायां तत्प्रकारकज्ञानसत्वे इव निर्विकल्पकादपि नियमतस्तद्विशिष्टवैशिष्ट्य बोधः । यत्रविशिष्टवैशिष्ट्यं वस्तुतोबाधितं तादृशविषयबोधस्थलेचतज्ज्ञानेतत्तद्दोषाणांनियामकतयाकदाचित्केवलतदुपलच्चितवैशिष्ट्यबोधोप्युपपद्यते । तद्धर्मप्रकारकज्ञानवति तादृशस्थलेविशिष्टांशेभ्रमस्य कदाचिदेव उत्पत्त्यादोषस्य तन्नियामकताया भवतोप्यावश्यकत्वात् इति चेन्न विशिष्टवैशिष्ट्यबोधे विशेषणतावच्छेदकप्रकारकज्ञानाश्रये घटत्वादि निर्विकल्पकानंतरं घटोनास्तीत्याकारकाभावप्रत्यचवारणाया भावबुद्धौप्रतियोगितावच्छेदकप्रकारकज्ञानहेतुतायाः कल्पनीयतया गौरवात् एतन्मते पुनरेवबुद्धेः घटत्वादिविशिष्टवैशिष्ट्यावगाहितया तत्र विशेषणतावच्छेदकप्रकारकज्ञानसमुद्रयेव तदावश्यकत्वे घटत्वादिप्रकारकज्ञानस्य स्वतन्त्रहेतुत्वाकल्पनात् घटत्वसंयोगसाधारणवैशिष्ट्यत्वस्य दुर्वचतया वैशिष्ट्यानां विशिष्योपादेय तयाविशिष्टनिरूपि तानुयोगित्वाख्यवैशिष्ट्यावगाहिन्यामभाव बुद्धौ घटत्वादिप्रकारकज्ञानत्वमस्तु विशिष्टनिरूपितसंयोगाद्यवगाहिबुद्धौ तत्तद्धेतुत्वं नियुक्तिकं इति वाच्यं विशिष्टप्रतियोगिकत्वावच्छिन्न संसर्गताकत्वस्य विशेषणावच्छिन्नप्रकारताकत्वादेव तस्य विशेषणतावच्छेदकप्रकारकज्ञानजन्यतावच्छेदकतायाः प्रागुक्तत्वात् वैशिष्ट्यभेदेन कार्यतावच्छेदकताभेदाभावात् घटवद्भूतलमित्यादि विशिष्टवैशिष्ट्यबोधे घटत्वादिप्रकारकज्ञानस्य हेतुत्वेविशिष्टवैशिष्ट्यबोधे क्वाविशिष्टतादृशप्रत्यचात्मकबोधसामग्र्या भिन्नविषयकानुमित्यादिकं प्रति प्रतिबंधकतायां तादृशज्ञानरूपकारणस्याधिकस्य





निवेशनीयतया गौरवमिति तु नाशङ्कनीयं,भवन्मतेपि तत्र विशेषणज्ञाननिवेशेन साम्यात् विशकलितदण्डरक्तत्वादिप्रकारकज्ञानदशायां रक्तदंडोनास्तीत्याद्यभावप्रत्यचवारणाय दंडत्वादिधर्मितावच्छेदककरक्तत्वादिप्रकारकज्ञानस्य स्वतन्त्रहेतुताकल्पनप्रयुक्तलाघवानुरोधेन विशेषणतावच्छेदकांशे सधर्मितावच्छेदककविशिष्टवैशिष्ट्य बोधे तत्तद्धर्मितावच्छेदककविशेषणतावच्छेदकप्रकारकज्ञानस्य हेतुतासिद्धिरपि द्रष्टव्या । एवमेव तादृशहेतुत्वाकल्पने इच्छाविशिष्टरक्तदंडवानित्याद्युपनीतभानसामग्र्याअनुमित्यादिप्रतिबंधकतायां उपनायकज्ञानविधया हेतुभूतानां रक्तत्वदण्डत्वविषयक ज्ञानत्वदंडत्वज्ञानत्वरक्तत्वज्ञानत्वरूपभिन्नभिन्नरूपेण निवेशनीयतया तेषां मिथोविशेषणविशेष्यभावे कारणांतरेण सममनेकेषां तथात्वेविनिगमनाविरहेण गौरवमस्माकं च तथा विधनानाज्ञाननिवेशस्थले दंडत्वादिधर्मितावच्छेदककरक्तत्वादिप्रकारकैकज्ञानस्य निवेशनीयतया लाघवमित्यादिबोध्यम् । एवमधिकरणतावच्छेदक निर्विकल्पकानन्तरम भावबुद्धेर्वारणायाधिकरणतावच्छेदकप्रकारकज्ञानहेतुत्वान्तराकल्पन प्रयुक्तलाघवेनानुयोगितावच्छेदक प्रकारकज्ञानस्य विशिष्टवैशिष्ट्यबोधहेतुतासिद्धिः भूतलङ्घटवदित्यादिबुद्धेर्भूतलत्वावच्छिन्ना नुयोगिकविशिष्टवैशिष्ट्या वगाहितया तत्रानुयोगितावच्छेदकप्रकारकज्ञानसमुद्रयैवाभावात् भूतलत्वादिप्रकारकज्ञानस्यापेचितत्वात् विशिष्टप्रतियोगिकवैशिष्ट्य बोधसाधारण्यात् तद्धर्मावच्छिन्नविषयताकबुद्धित्वस्य तत्प्रकारकज्ञानजन्यतावच्छेदकत्वसंभवेपिविशेषणतावच्छेदक विशेष्यतावच्छेदक प्रकारकज्ञानहेतुतायाः ऐक्यादेकयुक्त्यै वोभयहेतुतासिद्धिरित्यालोचनीयमिति दिक् ॥ इति विशिष्टवैशिष्ट्यबोधविचारः समाप्तः॥ग्रम्॥